# काव्यदीपिका

( "स्नेहवर्षिणी"-व्याख्या-समुद्दीपिता )



" काव्यालापाश्च ये केचिद्गीतकान्यखिलान्यपि ।
शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः ॥ "



—श्रीसुरेन्द्र झा

वाणीविलासग्रन्थमालायाः पञ्चमं रत्नम्

श्री पूर्णचन्द्र विद्यारत्न-सङ्कलिता

# काव्यदीपिका ।



'दरभङ्गा'-मण्डलान्तर्मण्डि-'वल्लीपुर'-संवसथ-वासिना

'साहित्याचार्य्य'-'तीर्थो'पाधिसाधिना

श्री सुरेन्द्र झा शर्मणा

निर्मितया 'स्नेहवर्षिणी'-व्याख्यया संवलिता ।



प्रकाशक—

वाणीविलास संस्कृत पुस्तकालय

कचौड़ीगली, बनारस सिटी ।



प्रथमं संस्करणम् } १९३४

# किञ्चित्

## ( काव्यं संस्कृत-भाषा च )

अहर्मुखे मालिन्यमुपगतानि नक्षत्राणि, अस्तुमुपयान्तं चन्द्रमसं. प्राचीपटे प्रतिक्षणं परिवर्तमानं प्राभातिकं चित्रञ्च पश्यतां; सायं समाक्रान्त-भुवन-साम्राज्यं रविनृपतिं दुर्गतौ पतन्तं नयनैरवलोकयतां; नित्यनूतनाया नदीनर्तक्याः कल-गीतमाकर्णयतां; गिरेः काननस्य सिन्धोश्चानिन्द्यं सौन्दर्य्यं विमृशतां; राजतीं ज्योत्स्नां, सौवर्णमातपमैन्द्रनीलं नभोवितानं स्फारितनेत्रैरवेक्षमाणानां; वियोगे, दुर्गतौ, उपद्रुतौ निमग्नानामश्रुपरिप्लुताननानां प्राणिनां हृदयभावसधीया-नानां; सुख-दुःखमयैर्भावैश्चित्तद्रुतिमनुभवतां हृदयवतां चेतसि कीदृशमालो-डनम् ! कीदृशी उत्क्रान्तिः !! कीदृशश्च भावप्रवाहः समुच्छलति !!!

अयमेव भावो—यदा अन्तर्न माति—बहिर्भवितुमेव चेष्टते, यदा च परिस्थितावनुभवितार आन्तरं क्रन्दनं रोद्धुं नात्मनः प्रभवन्ति, द्रुतमुल्लासञ्च कथमपि गोप्तुं नेशते तदैव सहृदयाः—प्रकाशनशक्तावीशानाः—कवयो जगदुपकर्तुं मनुजजन्मतां सफलयितुमुच्चैर्भाषया मुक्तकण्ठं हसन्ति रुदन्ति च। अयमेव हासः—इदमेव रोदनम्—इयमेव मर्मस्पर्शिनी अनुभूतिः प्रकाश-मुपगताः काव्यपदं जुषन्ते !

भावक-शिल्पिनश्चारु रचना—कवि—कारोः सजीवं चित्रं—भावना-बीजस्य सरसकिसलयस्तरुः—प्रकृतं काव्यं केनापि लक्षणेन विचक्षणैर्मुद्रि-तमस्तु । "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" उच्चैरुद्घोषयन्तु; "वाक्यं रसात्मकं काव्यम्" इति ढक्कां वादयन्तु; "रीतिरात्मा काव्यस्ये"ति श्रावयन्तु; "वक्रोक्तिः काव्यजीवितम्" इति निरन्तरं चर्चयन्तु; अलङ्कारमेव वा काव्या-त्मतया स्थापयन्तु । किन्तु सर्व एवालङ्कारिकपथिका भिन्नैरपि पथिभिः काव्यमन्दिरमेव प्रविशन्ति प्रवेष्टुं चेष्टन्ते द्वारं वा समारोहन्ति !

सहृदय हृदयाह्लादजनकज्ञानगोचरीभूता रमणीयतैव का ? रस-प्रति-

पाद्यो भावना संस्कृत्या चिदात्मक आह्लादमय आस्वाद एव कीदृशो जीवः ? रीतिः—भावप्रकाशिनी शब्दप्रणाली एव कुतो वहति ? उक्तौ वक्रता—विदग्धता किंस्वरूपा ? शब्दार्थोपस्कारकोऽलङ्कार एव किमलङ्कुरुते ?

नावश्यकता विवृतेः । तत्कीदृशं काव्यं यत्र रामणीयकं रत्युत्साहादि-स्थायिभावका रसा रीतिलङ्कृति विदग्धता च अहम्पूर्विकया नापतन्ति ! तत्काव्यमेव क्रियते कालाय स्थितिशीलं ? यत्र हृद्गताऽनुभूतिः, देहिनां चिरन्तन-प्रवृत्तिः, कवेर्भावकणाश्विन्वती कापोतिकी वृत्ति र्निपुणं न चित्रिताः ! तत्कविता का ? यत्र 'सत्यं' वस्तु 'सुन्दर' मिव निबद्धं 'शिवाय' न कल्पते ! तदपि न किमपि कविकर्म ! यत् 'असतो' न 'सद्' गमयति 'तमसो' न 'ज्योति' र्नयति 'मृत्यो' र्न 'अमृतेन' योजयति !!

ननु किंलक्ष्यमूला कविता ? किमुद्दिश्य वा प्रादुरास्ते काव्यम् ? अपि यशः सम्पत्तये व्युत्पत्ति प्रसारणाय धनमधिलब्धुं वरं वरीतुम् उपदेशं वितरितुं वा ? ननु भवन्तु प्रतिपादितानि प्रयोजनानि एतेन प्रतिपन्नानि । किन्तु एतान्युद्दिश्यैव प्रवर्तते काव्यमिति वक्तुं न प्रभवामः । हिमवान् भारतसागरोत्थमुष्णं घनीभूतं बाष्पवातं सङ्घर्षणेन वर्षयितुमना भारतस्योदीच्यां न शिर उन्नमयति । न च जलयानानां वाणिज्याय गतागतं विस्तारयितुं गङ्गा सागरं सङ्गच्छते ! न वा शिशुः क्षेत्रे बीजं वप्तुं युद्धे योद्धुं पुस्तकं वाचयितुं वा जन्म लभते ! इदमन्यत् यत् तेभ्यो जगदगणितमुपकारमावहतु ! किं ज्ञानी दत्तात्रेयः शिक्षां कलयिष्यतीति बुद्ध्यैव पिपीलिकया भारो वाहितः ? कुक्कुरेण वा निद्रा परिहृता ? न च कारुणिकमौलिमणि र्वाल्मीकिः कमपि मोदयितुं किञ्च न यश एव वा सञ्चेतुं 'मा निषाद' इति कवितामुज्जगौ ! न च किमप्युपदेष्टुं कालिदासो यक्षेण 'मेघदूतं' प्राहिणोत् ! परन्तु स्यादिदं परमप्रमोदस्थानम् अधिगच्छतु भावयिता कान्तासम्मितमुपदेशं, वसु समासादयतां कविर्वाचको वा यशोलाभ पुरस्सरम् । किन्तु प्रकृतकाव्यम् आत्मपदवीमाश्रयितुकाममेव कवे-रसनां लेखनीञ्चावलम्बते !

अस्तु, भाषायाः काव्येन कीदृशः सम्बन्धग्रन्थिः ? कियती वा उपयोगिता ? अत्र दृष्टिनिक्षेपो नाऽप्रासङ्गिकः ।

प्राणिमात्रस्य खलु एका मानसी भाषा विद्यते। यस्यां सर्वे सदृशमेव देश-कालादिभेदातिरिक्तमेव चिन्तयति। आस्तां वन्यजातीयः, वर्ततां वा आर्य्यपूरुषः, विद्यन्तां वा मूकाः सन्तिष्ठन्तां च वावदूकाः, किन्तु तेषां समेषामपि चिन्तनायां न भेदलेशोऽपि। सर्वो "रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान् पर्युत्सुकी भवति" करुणं दृश्यं पश्यन् 'शोकं श्लोकत्वमुपगमयितुं यतते।

किन्तु भावं बहिः प्रकाशयन्ती अभिधानप्रचारा भाषा विभिद्यते प्रतिदेशम्। इयञ्च भाषा कविहृदयगत–वस्तु–वर्णनायां समर्थस्वरूपा न वा, प्रतिक्षणं स्फुरतां नैकभङ्गीनाम् अर्थनटानामभिनययोग्यो मञ्चो नवा—इति समालोच्यैव भाषायाः कवितार्थोपयोगिता निर्णीयते। अन्यथा सामान्यकार्यसूचनप्रयोजनतया चास्याः, मूकोऽपि क्षुत्पिपासादि करमुद्रया कथञ्चित्सूचयत्येव; असभ्याऽपि शतद्वितयं शतत्रितयं शब्दानां जानती जातिः स्वमुदरं यथारुचि पुष्णात्येव। अत्र तु भाषाणां तारतम्यविषयिणी विवेचना।

अहमेवं जाने। भाषा चमत्कारप्राणायाः कवितायाः कायः! कवित्वबीजस्य वा अङ्कुरीकरणाय पल्लवनाय च क्षेत्रम्। गगनमेव वा तां मन्ये यत्र अनुभूत्युष्मणः जातं भावबाष्पं काव्यमेघत्वमुपयाति! भित्तिमथवा प्रख्यापयामि भाषां यत्र काव्यचित्राणि कविकारुभि र्निपुणमङ्क्यन्ते! एवं सुखमवगन्तुं शक्यते भूमिप्रासादयोरिव यावत्स्थिति तयो र्नित्यः सम्बन्धः!

यद्यपि शर्करा केनाप्यम्बुना मिश्रिता भवतु तन्माधुरी स्थिरैव। किन्तु यदि प्रणालीपयसा सा संयुञ्जीत प्रवृत्तिरेव न सचेतसां तत्र जायेत। समयाद्वा कियतः परमपेयता माप्नुयात्। किन्तु गाङ्गेनाम्बुना सङ्गच्छन्त्यास्तस्या माधुर्यं धुर्यं चिराय जनताभिः सतृष्णं पेयं सम्पद्येत।

जानामि स्वीकरोमि "उत्ति विसेखो कव्वो भाषा जाह्वोइ सा होउ" मन्ये 'केनापि भाषावल्कलेनावृतामुक्ति-शकुन्तलां विश्वसुन्दरीम्। समर्थयामि "न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते" नात्र किञ्चिदनृतं विवेचयामि "का भाषा का संस्कृत विभव चाहिये साँच" परमेतदेव विलोकनीयम्—कुशलश्चित्रकारः शुष्कलेखिन्याऽपि ( Pencil ) भावपूर्णं चित्रमङ्कितुं शक्नोति किन्तु रङ्ग–प्रकर्षेण तत्र कियान्स्याच्चमत्कारः! तृणनिर्मिता अपि कुटीरा मनोरमाः

सुखेन वस्तव्याश्च शक्नुवन्ति भवितुं किन्तु मणिमयभवनानि कियन्तमानन्द-मुत्पादयेयु निवत्स्यताम् !! सुन्दरं मनो वसति अभद्रेऽपि वपुषि, किन्तु तदेव चेन् मनोभवपराभवकारिणि कलेवरे वासं कल्पयेत् कीदृङ् मनोरमं भवेत् !!!

इयं हि संस्कृतभाषा काव्याय कियदुपयुज्यते—इति पक्षपातरहितै र्मनी-षिभिः समालोचनीयम् । संस्कृत-'चन्द्रोदय'स्य गुणान् विवेचयितुं 'रस'—कोविदैरेव प्रवर्तनीयम् । अत्र नास्ति केषाञ्चिद्विमत्यं यत् 'अनेकार्थकानि पदानि, शब्दनिर्माणशालिनो धातवः, प्रचुरपर्यायाः शब्दाः, अनुप्रासादिप्रतिपादिका पदयोजनाप्रणाली यस्यां बहुलतया मञ्जुलतया चासते तस्यामेव भाषायामुर्वर-भुमा उप्तं बीजमिव काव्यं सफलतामधिगच्छति ।

तदेवं संस्कृतं विश्वभाषासु प्रतिद्वन्द्विरहितं चक्रवर्तिपदमलङ्कुते । को नामास्य विशालं शब्दकोष-कल्पतरुं सर्वार्थसाधकं न प्रतीयात् । वृहत्कोष-स्थाल्याः प्रथमं ( काव्ये निरतिशयोपयोगि ) कमलमिति शब्द-तण्डुलं परीक्ष्य-ताम् । प्रथमं पर्यायवाचकैरेव सुपुष्टमिदम् । अनन्तरं योगरुढितो जलादस्य जायमानतया जलपर्यायतः 'जलजम्, अम्भोजम्, वारिजं, नीरजम् × × × पुनर्जातशब्दस्य प्रतिशब्देषु स्थापनया जलजातं, जलरुहं—प्रभृतयोऽपरिमिताः पर्यायाः । एवं मेघ-समुद्र-सूर्य-चन्द्र-प्रभृतीनाम् । शङ्कर एव दिगम्बरतया चन्द्रशेखरतया नीलकण्ठतया त्रिनेत्रतया विविधपर्याययोगेन सहस्रं लक्षञ्च नामानि लभते । इयमेव शक्तिः संस्कृते सहस्रनामावलीनां सहस्राणि व्यरचयत् । पदमञ्जुलताविषये किं पुनर्वक्तव्यम् सति जयदेवेऽपि सम्भवति ईदृशः प्रश्नः ? "नैषधे पदलालित्यं" दण्डिनः पदसौष्ठवम्" इति तद्गुणेनैव प्राप्तप्रसिद्धीनां कवीनां पुरतोऽप्युत्तरस्य चेष्टा । चमत्कार प्रदर्शनाय अनेकार्थकानि पदानि चेद् दिदृक्षति "प्रत्यक्षरश्लेषमयप्रपञ्चम्" इत्युच्चैरुद्घोषयितुः सुबन्धो 'वासवदत्ता' मधीताम् ! सुन्दरं वा श्लेषं कादम्बर्याः प्रतिपृष्ठमाश्लिष्टं द्रष्टुं चेष्टताम् !!

शब्दनिर्माणे अचिन्त्यशक्तयो धातवः प्रत्ययाश्च तत्सम्पादने स्वयं ग्रहिलाः कियन्तः सन्ति भाषासु तदन्यासु ? कावा भाषा पाणिनिमिव शब्दसाधुत्वनिष्णातं तातं सूतवती भाष्यकारञ्च भाषाविज्ञाननिपुणम् । रीतयो रसानुसारिण्यो देश-

विशेषे समादृततया तदाख्ययैव ख्याता वैदर्भीप्रभृतयः सगर्वं प्रख्यापयन्ति संस्कृतस्य काव्यानुकूलताम् !

समासस्य—अचिन्त्यैश्वर्यस्य घटे समुद्रस्येव लीयमानस्य—विषये किमिति वक्तव्यम् ! संस्कृत–पुरुषस्य अयमक्षयो निषङ्गः ! सर्वप्रयोजनप्रतिपादिनी सुरभिश्च संस्कृत–वशिष्ठस्य !! वाक्यश्च पुनर्निर्बन्धं समापतितानां पदानां स्वतन्त्रतया स्वराज्यमिव विकाशप्राज्यम् ! किमतः परमपि संस्कृतस्य कविता-सस्योत्पादने नितरामुर्वरतायां कश्चिदुत्पद्यते सन्देहः ?

हेतुभिरेतैः संस्कृतसाहित्यं जगति समुन्नतेः सीमानमधिरुरोह । इदमेव च समासां भाषाणां प्रसवित्रीपदमुपगतं सर्वतोऽधिकमादरं भुवने उपलेभे । एतस्यैव काव्योद्यानं नित्यमधिवासितवसन्तमिव निरन्तरं स्रवदमन्द–भाव–मकरन्दमिव कूजन्मधुरकण्ठकविकीरवृन्दमिव केषां न सचेतसां विश्रामाय चिराय भृशमुपयुक्तम् ? अस्माकमेव संस्कृतसरस्वतीमातुरङ्के कुमारः कालिदासः पीयूषभाषितेन आचन्द्रतारकं जगज्जीवयति ! गभीरगिरो वाल्मीकि-व्यासादयो वरसूनवोऽद्यापि कियदुपदिशन्ति मनोरञ्जनाश्चितं भुवनमण्डलम् !! 'हर्षो' रसं वर्षन्, 'भासो' रूपकं भासयन्, 'बाणो' बाणीं पल्लवयन्, 'भवभूतिः' प्रतिभाविभूतिभिः कवितामन्दिरं सम्भावयन्, 'दण्डी' पदावलीं मण्डयन्, मम्मटः साहित्याटवीं साटोपमटन् 'अलङ्कारान् सर्वानपि गलितगर्वान्' कुर्वन् पण्डितराजो जगन्नाथः संस्कृत–साहित्यस्य जयस्तम्भमधिभुवनमधिरोपयन्ति !!! अद्यापि इदमेव साहित्यं कतिधाऽनार्य्यै विलुण्ठितग्रन्थरत्नमपि "रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः" इति सगर्वं वक्तुमीशानम् !

किन्तु हन्त ! 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण'। यो हि भानुः स्वैरेव करै र्जगतस्तिमिरमपनोदयामास स स्वयमेव तमोनिधौ पतन्नसहायः समपद्यत ! यो नाम चन्द्रोऽमृतकिरणै र्लोकमाह्लादयामास स एव राहुकृशानौ हविर्भूत्वा कं न जनमरोदयत् ? हन्त ! अमरभाषापदमारूढं स्पृहणीयोन्नति संस्कृतम्—असंस्कृतैः पामरैर्मृतभाषया सम्बोधितम्, निजैरेव सूनुभिर्दुत्कृतम्, तदीयमेव सर्वस्वमादाय सम्भृतनिजकोषैः सावज्ञमुपहसितं संस्कृतम्—अवन-

ति-गर्ते पतन्न्युब्जीभूताङ्गं तारमाक्रन्दतीति कोऽत्र कर्णं योजयति ? अहह ! योजयन्ननपि वा कर्णं कस्तदुद्धर्तुमुत्सहते ?

भगवन् ! विश्वयोजिन् । कतिधा त्वमिमां संस्कृतभाषामवोचः, कतिधा चास्यामेव प्राचीनैः प्राचेतसप्रभृतिकविभि र्वर्णितोऽपि यशश्चरितश्च सर्वतो निपुणं वर्णयन्त्याऽनया निरन्तरं सम्भावितोऽपि न स्मरसि साम्प्रतं दैन्यमुपागतामिमां भाषेश्वरीम् !!

निधेहि विलपतामस्माकं तत्सूनूनां विनये मनः । नीरदो भवन्नवतर संसारं, सम्भर शुष्यज्जीवनां सुरसरस्वतीम् । प्रविश रविमण्डले, समुद्भावय सङ्कुचद्दलां सुरभारती–सरोजिनीम् !!

देव ! पुनरेकधा वसन्तस्य ते पदार्पणेन चिरं वहतु दक्षिणो वायुः ! उल्लसिता भवतु गीर्वाण-वाणी-लता ! विकसन्तु काव्यकुसुमानि ! कूजन्तु कविकोकिलाः ! गुञ्जन्तु मञ्जु सहृदयमिलिन्दपुञ्जाः ! वर्षन्तु तत्त्वमकरन्दानि !! नन्दन्तु च चिराय वसन्तागमनप्रतीक्षमाणनयनाः संस्कृतप्रणयिनो जनाः !!!

× × × ×
× × × ×

सम्प्रति प्रकृतं विवेचयामि । प्रस्तुता काव्यदीपिकेयं पुस्तिका वङ्गप्रान्त-प्रसाधिना श्री पूर्णचन्द्रविद्यारत्नेन सङ्कलिता । उपकरणानि प्राचामेव साहित्य-शास्त्र–विवेचकानां रचना–भाण्डागारात् सञ्चितानि । उपकरणानां स्थायित्वे समुपयोगितायाश्च कः संशयीत ? केवलं सङ्कलने तेषां किंविधं कौशलमिति विलोकनीयम् । प्रस्तुतलघुसङ्ग्रहे काव्योपयोगिनो विषया निपुणं निवेशिताः । काव्यस्वरूपनिरूपणम्, वृत्तित्रयप्रतिपादनम्, ध्वनि–गुणीभूतव्यङ्ग्य–चित्रत्वेन दृश्य-श्रव्यत्वेन च काव्य प्रभेदनम्, रस–गुण–रीत्यलङ्कृति–स्वरूपभेद वर्णनम्—यावन्ति सङ्कलनीयानि निपुणं सङ्कलितानि । सङ्ग्रहे रसास्वादे च सुरुचिर्न विस्मृता । परकीया–सामान्यादि–नायिका–परिचयो ग्रन्थगौरव भयादेव वा भवतु, मृदुमनोवयोभ्यश्छात्रेभ्यो न दत्त इति वाढं समर्पयामि । स्वभावोक्तेश्चारुताऽपि मन्मनसैव संस्थापिता । अथ यत्र यत्र मतभेदप्रपञ्चः,

मया तत्र तत्रैव सङ्कलयिता नम्रतया निवेदितः। नूनमियं दीपिका परीक्षार्थिनामिव शिक्षार्थिनामपि पुरतः काव्यतत्त्वानि प्रकाशयति।

दीपिकामिमां स्नेहैर्वर्द्धयितुं मया हस्तः प्रसारितः। नाहं विश्वसिमि यावदपेक्षितं व्याख्यास्नेहं निक्षेप्तुं मया पारितम्। अंशतः शैथिल्येन भूयस्तया मनसश्चपलतया पक्षतः टीकाकृतां पद्धतौ प्राथम्येन पादार्पणेन यावदीहितमंशतोऽपि न सम्पादितमिति हृदाऽस्मि दूनः! अथापि विद्यार्थिनः—यदर्थमियं प्रवर्तना—कमपि चेदुपयोगमितः प्राप्नुयुर्नूनमकृतकृत्योऽपि कृतार्थतामात्मनः स्वीकरिष्यामि।

प्रातः स्मरणीयचरण—'राधापरिणय'—महाकाव्य—प्रणेतृ श्रीयुत (मैथिल श्रोत्रिय श्री बदरी नाथ झा शर्मणां) गुरुवराणां पूज्यपाद—पाथोजयोः प्रणमन–सुमनोऽञ्जलिं सविनयमुपहरन् तद्दत्तमुत्साहमाशिषश्च तदीयां शिरसा वहन् 'स्नेहवर्षिणीं' कलयन् बुद्धिवैकल्याज्जायमानास्त्रुटीः क्षमयितुं क्षमापरान् कृतिनो मुहुरभिनन्दामि।

त्रुटि-तामिस्रोपेतं
दूषक-कौशिक-घटा-भीतम्।
कुसुमं विकाशमानय
सज्जन-भानो! क्षमा-किरणैः॥

भारती–मन्दिरम्
वल्लीपुर–(दरभङ्गा)
आश्वि० शु० ५ (१९९२ वै०)

संस्कृत प्रणयिनां पुरतो विनतस्य
सुरेन्द्रस्य

उमाकान्तो गौड़ · रानीकटरा · लखन

# समर्पणम् ।

वन्दनीय–पादारविन्द–समस्तश्रद्धास्पद–
(श्रीभुवनेश्वरझा शर्मेति) सुगृहीतनाम तात-पादपाथोजरजःसु
सप्रश्रयं साञ्जलि समस्तसद्भावनापुरस्सरम्—

सन्ततेर्जनने वेधा विष्णुः स्नेहेन पालने ।
अभव्य-भञ्जने शम्भुः 'पिता' देवत्रयी पुरः !
आशिरुक्तौ 'सहस्रास्यः' 'सहस्राक्षः' शुभेक्षणे ।
तमो-भेदे 'सहस्रांशुः' सर्वदेवमयः 'पिता' !

मनः कवितया पुंसां तनुर्येन चिकित्सया ।
आत्माऽऽध्यात्मिकतत्त्वेन पावितः, कोऽप्यसौ जयेत् !
मुक्तं 'रामेश्वरं' श्रेष्ठं 'तेजनारायणा'ऽनुजम् ।
स्मरन्तं सन्ततं तातं प्रणमन् साश्रु ! तौ भजे !!

बुधा भुवि दुराराध्या देवा लोचन-दुर्लभाः ।
मच्छ्रद्धा-मन्दिरे तुष्टः 'पिता' प्रत्यक्षदेवता !

आश्वि० शु० ९
(१९९२ वै०)

चरणरेणुं शिरसा दधानस्य
**सुरेन्द्रस्य**

# विषयसूची ।

तेजस्विनावधीतमस्तु ।

# स्नेहवर्षिण्या व्याख्यया संवलिता

# काव्यदीपिका ।

काञ्चन-विद्युल्लेखां
नव-नीरद-निकष-संसक्ताम् ।
उत्पश्यतो मुरारे-
र्निःश्वासः सारयेन्मेघम् ॥

साहित्य-सद्म विशतामादेयां काव्यदीपिकाम् ।
उद्दिदीपयिषौ स्नेहैश्छात्रवर्गः प्रसीदतु ॥

अथ ग्रन्थप्रणेता छात्रानुपकर्तुं प्रारिप्सितं प्रबन्धं निर्विघ्नं समापयितुं रचनादौ मङ्गलाचरणरूपसमुदाचारपरम्परां परिपालयितुं विद्याधिदेवतां शारदां हृदि चिन्तयन्, प्रयोजन-प्रभृत्यनुबन्ध-चतुष्टयमधस्तनेन च्छन्दसा प्रतिबध्नाति—

मातरं हृदये ध्यात्वा विशदाम्बुजवासिनीम् ।
बालानां सुखबोधाय क्रियते काव्यदीपिका ॥

विशदे-श्वेते, अम्बुजे-कमले, वस्तुं शीलं यस्यास्ताम्, ('श्वेत पद्मासना देवी' इति स्मरणात्) मातरं-जननीं, शारदामित्यर्थः । हृदये-

अन्तः, ध्यात्वा-सञ्चिन्त्य, बालानां-साहित्यशास्त्रे प्रविविक्षूणां, सुखेन-अनायासेन, बोधाय-काव्यतत्त्वज्ञानाय, काव्यस्य-कविप्रणीतस्य अलौकिकानन्दविधायिवाक्यस्य, दीपयति ( दीपवत् ) प्रकाशयति या सा दीपिका-तदभिधेया रचना, क्रियते-प्रणीयते, सङ्ग्रहरूपेणेति भावः । मयेति संयोज्यम् । यथा तमो निराकृत्य प्रदीपः सकलमेव वस्तु प्रकाशयति, तथेयमपि दोषान्निरस्य सर्वमपि काव्यरहस्यं जिज्ञासूनां समक्षमुद्द्योतयिष्यतीति दीपेन समं साम्यमस्याः सूपपन्नम् । अत्र रस-गुण-रीत्यलङ्कृति-विवरणपुरस्सरं काव्यनिरूपणं विषयः, आयासराहित्येन तज्ज्ञानप्रसारः प्रयोजनम् , साहित्यतत्त्वं जिज्ञासवोऽधिकारिणः, प्रतिपाद्यप्रतिपादकभावः सम्बन्धः ।

एतद्ग्रन्थप्रतिपाद्यविषयस्य काव्यस्य विशिष्य फलं पुनः प्रदर्श्यते—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥" ( मम्मटः )

काव्यं—कविरचितपरमप्रमोदविधायि वाक्यं, यशसे-कीर्तये, अर्थकृते धनलाभाय, व्यवहारस्य-लोकव्यवहृताचारस्य, विदे-ज्ञानाय, शिवात्-कल्याणात्, इतरस्य-भिन्नस्य, अमङ्गलस्येत्यर्थः । निवृत्तये-निवारणाय, सद्यः-श्रवणदर्शनसमकालमेव, परा-उत्कृष्टा, या निर्वृतिः-सुखं, तस्यै-परमप्रीतये इत्यर्थः । पुनः कान्तासम्मिततया-प्रेयसी-निर्विकल्पतया, उपदेशयुजे-हितवाक्यप्रदानाय; ( सद्योऽनुपदिशन्त्यपि कान्ता यथा दृष्टान्तोपन्यासेन कान्तं सुखेन हितं बोधयति तथेदमपि मधुररसास्वादपुरस्सरमेव काव्यानुशीलिनं सत्पथमारोहयति । ) भवति-कल्पते, (यथासम्भवं निर्मातुः प्रयोक्तुरुभयोरपि ) क्रियायोगे चतुर्थी । कृत्-विद्-युज् शब्दाः क्विबन्ताः ।

इदमेव 'मम्मटोक्तं सङ्ग्रहीता दृष्टान्तोपन्यासपुरस्सरं विवृणोति—

काव्यं हि पाठादिसमनन्तरमेवानिर्वचनीयविलक्षणानन्दाय,

कालिदासादीनामिवयशः सम्पत्तये, श्रीहर्षादेर्धावकादीनामिव धनाधिगमाय, लोकाचारादिपरिज्ञानाय, सुधामयेनोपदेशवचनेन रामादिवत्प्रवर्तितव्यं न रावणादिवत्–इति सत्पथप्रवर्तनाय, साधुविगर्हितवर्त्मा (न) नुवर्तनाय च, तत्तद्भाषासु व्युत्पत्तिलाभाय च यथायोगं कवेः पाठकानाञ्च भवतीति बहुफलतया काव्यस्य तल्लक्षणादिकमवश्यमवगन्तव्यं धीमताम् । इति प्रथमतः काव्यलक्षणमाह—

अपरिमितफलजनयितुरपि काव्यस्य प्रधानफलानि क्रमशो दर्शयति—१-सर्वतः प्रथममविलम्बेन लोकोत्तरानन्दो भवति ( वस्तुत आनन्ददानमेव मुख्यं फलमितिनिश्चिन्न्वन् ग्रन्थकृत् कारिकोदितक्रममुल्लङ्घ्य तदादावुपन्यस्यति । यदुक्तं धनञ्जयेन–" आनन्दनिष्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः । योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादपराङ्मुखाय ।" २-कालिदासादीनामिव यशश्चन्द्र आकल्पं द्योतते । ३-यथा धावककविः श्रीहर्षनाम्ना 'रत्नावलीं' विरचय्य ततो विपुलं द्रव्यमधिगम्य सुखं बुभुजे तथैव सम्पदं भुङ्क्ते । ४-नारदं सम्मानयन्तं गोविन्दं ( माघे ); विनीतवेषेण तपोवनं प्रविशन्तं दुष्यन्तं ( शाकुन्तले ) आकलय्य आचारं शिक्षते लोकः । ५-उपदेष्टुः कटुतामनुभवन्नेव अमृतद्रवोद्गारिभ्यो रामायणप्रभृतिभ्यः सुखाय रामचन्द्रवदाचरणीयं, दुःखाय रावणवत् सर्वथा न वर्तितव्यम्, इति मधुरोपदेशं हृदि धारयति जनः । ५-काव्यानुशीलनेन तत्तद्भाषासु विशेषज्ञानं लभते, प्रयोक्तुं जानाति, शब्दानधिगच्छति, इति शतशः पन्थानस्तत्र भाषानैपुण्यमासादयितुम् । एतानि केवलं रचयितुरेव न भवन्ति किन्तु प्रयोक्तुरपि । इत्यहो काव्यफलसम्पत्तिः !

एवं विविधफलस्य काव्यस्य लक्षणेऽवश्यमन्विष्यमाणे काव्यादर्शात् सङ्कलयिता तल्लक्षणमुल्लिखति—

कथ्यते काव्यम्–" इष्टार्थव्यवच्छिन्ना पदावली " ( दण्डी )

इष्टैः—सहृदयहृदयाह्लादजनकज्ञानगोचरीभूतैः, अर्थैः—प्रतिपाद्यैः, व्यवच्छिन्ना—प्रतिपाद्यप्रतिपादकभावेन सम्बद्धा, पदानाम्—योग्यताऽऽकांक्षाऽऽसत्तिमतां सुबन्त-तिङन्त-शब्दानाम्, आवली—समुदायः, वाक्यमिति यावत् । काव्यं—कविकर्मेति कथ्यते—उदीर्य्यते, आचार्य्यैरितिशेषः । एतेन 'रमणीयार्थप्रतिपादकः शब्दः काव्य'मिति फलितम् । तदेव वृत्तौ—

इष्टाः—अलौकिकचमत्कारित्वेन सहृदयमनोरमाः, अर्थास्तैर्व्यवच्छिन्ना—विलक्षणीकृता, पदावली—पदसमूहः, काव्यम् । 'रिपुस्ते मृतः' 'पुत्रस्ते जातः' इत्यादिवाक्येन जनितस्य आह्लादस्य न लोकोत्तरत्वमिति न तत्र प्रसक्तिः । तथा च लोकोत्तरचमत्कारितया सहृदयहृदयाकर्षि वाक्यं काव्यमिति फलितम् । तन्नाम काव्यं काव्यं—यत्खलु विलक्षण—चमत्कारितया बलादिव वशमानीय सामाजिकजनमनांसि रञ्जयति ।

अलौकिकम्—लोकाविषयकं, लोकप्रसिद्धपदार्थानुभावेन जनयितुमशक्यमिति यावत् । यत् चमत्कारित्वम्—चमत्कारः—चित्तविस्तारस्तेन । लौकिकं चमत्कारं सहृदयास्तदितरे च समानमेवानुभवन्ति । सोऽर्थस्तु 'वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम्' इत्यभियुक्तोक्तेः सुतरां भिन्नः । विलक्षणीकृता—समान्यतो विशिष्टीकृता, रसगुणरीत्यलङ्कृतिभिरुत्कृष्टीकृता इति यावत् । तदेव दृष्टान्तेन स्फुटयति । पुत्रजनन-रिपुनिधनयोः श्रवणात् किन्नोत्पद्यते आनन्दः ? सत्यम्, किन्तु सकललोकाऽवगम्य एषः । काव्य-नाट्यसमर्पितसुखदुःखजातं तु सुखैकरूपतामधिगतं पृथगेव—उत्कृष्टतरमेवेति स्फुटमस्य लोकोत्तरत्वम् । अथ निर्गतं लक्षणमुदीरयति—तथा चेति । सामाजिकाः—दृश्यकाव्येऽभिनयद्रष्टारः, श्रव्यकाव्ये श्रोतारः । सहृदया इति तात्पर्य्यम् । तेषां मनांसि रञ्जयति – ब्रह्मास्वादसोदरसुखमनुभावयति । सामाजिकनिष्ठ एव आनन्दमयास्वादो रसत्वेनाभिमत इति सङ्केतितमेतेन ।

दृष्टान्तमन्तरेण किमप्यभिधानं न तथा सहानुभूतिसहमिति कालिदासभवभूत्योः पद्यत्रयं काव्यस्याऽलौकिकचमत्कारित्वसिद्धये प्रस्तौति—

"मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात्॥"

शकुन्तलायाः सौन्दर्यं प्रथमं निरीक्षमाणस्य, तस्या अप्सरसो जनुः सम्भावयतो दुष्यन्तस्येयमात्मगता उक्तिः। अस्य—प्रत्यक्षं वर्तमानस्य, रूपस्य-सौन्दर्य्यस्य, शकुन्तलाऽधिष्ठस्येतिशेषः। सम्भवः—समुत्पत्तिः, मानुषीभ्यः—मनुजजातीयस्त्रीभ्यः, कथं नु स्यात्? कथमपि नेति भावः। इदमेव द्रढयति-प्रभातरलं कान्तिमयं, ज्योतिः—तेजः, वसुधातलात्—भूमण्डलात्, नोदेति नोद्भवति। तस्योत्पत्तिस्थलं गगनतलमेव। एवमियमपि काऽपि देवबालेव। अत्र प्रतिवस्तूपमालङ्कारः।

"उग्गिण दब्भकबला मई परिच्चत्तणत्तणा मोरी।
ओसरि अ पांडुपत्ता मुअंति अस्सुं बिअ लदाओ॥"
(उद्गीर्णदर्भकवला मृगी, परित्यक्तनर्तना मयूरी।
अपसृत-पाण्डुपत्रा मुञ्चन्ति अश्रु इव लताः॥)

(अभि० शकु०)

शाकुन्तलस्य चतुर्थाङ्के स्वामिसद्म प्रति प्रस्थितायां शकुन्तलायाम्, उक्तिरियम्। मृगी-कण्वतपोवनविहारिणी हरिणी, उद्गीर्णाः-मुखाद्बहिष्कृताः, तद्वियोगशोकादिति भावः। दर्भकवलाः-कुशकवलाः, यया सा, जाता। मयूरी-बर्हिणी, परित्यक्तम्—दूरतः परिहृतम्, नर्तनं—तालान्वितं चतस्राभिमुखीभवनं, यया सा, संवृत्ता। न केवलं चेतनानामेवेयं दशा; अचेतनानामपि—लताः—व्रतत्यः, अपसृतपाण्डुपत्राः—विगलितेषत्पीतदलाः, सत्यः अश्रु (पत्ररूपं) मुञ्चन्ति—स्रावयन्ति। रुदतीनां तासां गलत्पाण्डुपत्रमेव नेत्रजलं संवृत्तम्। स्वभावोक्तिसङ्गतोत्प्रेक्षालङ्कृतिः।

“अयि कठोर यशः किल ते प्रियं
किमयशो ननु घोरमतः परम् ।
किमभवद्विपिने हरिणीदृशः
कथय नाथ ! कथं वत मन्यसे ?”

( उत्तररामचरितम् )

उत्तरचरिते दण्डकवनं प्रविष्टं रामं प्रति सीतापरित्यागमुद्दिशन्त्या वासन्त्या उक्तिरियम्—अयि ! अङ्ग ! ( निर्दोषां पत्नीं परिजहतो जनस्य नामापि नादेयमिति ध्वनितम् ) कठोर ! कठिनहृदय ! ते-तव, यशः—कीर्त्तिः, प्रियम्-अभिमतं, किल-इति प्रसिद्धम्, ( नामख्यातये एव ते चेष्टा ! इत्यहो तव स्वार्थपरायणता ! ) किन्तु वस्तुप्रतिकूलतामुपगतम् ? तदेव व्यनक्ति—ननु—भोः, अतः परम्—अनपराद्धकान्तापरित्यागतोऽधिकम्, किमयशः ? इदं सर्वतोऽधिकमिति भावः । हे नाथ ! ( नाथधर्मं जहतं प्रति सोल्लुण्ठं सम्बोधनम् ) हरिणीदृशः—मृगनयनायाः, सर्वदा चकितलोचनाया इति भावः । विपिने—कानने, किमभवत् ? किं वृत्तं संवृत्तम् ? कथय-ब्रूहि, बत-अहह ! कथं मन्यसे-तस्या विषये कीदृशमनुमिनोषि ।

एतानि वाक्यानि पाठानन्तरमेव कमपि लोकोत्तरमानन्दं सहृदयानामातन्वन्तीति तेषां काव्यत्वम् ।

इति काव्यनिरूपणं नाम प्रथमा शिखा ।

एतानि—उल्लिखितानि रमणीयार्थप्रतिपादकानि, वाक्यानि, पाठानन्तरमेव—वाचनात्परमेव, सहृदयानां—भावकानां, लोकोत्तरं-लोकाविषयकम्, आनन्दं विस्तारयन्ति । ‘असहृदयास्तु वीणाकर्णनपराङ्मुखमहिषवत् नावगच्छन्ति, नचाद्रियन्ते । लोकोत्तरत्वाभावे काव्यास्वादानन्दस्य, अश्रुमोचनादिना वनत्यागादिना च केवलं दुःखहेतुना वस्तुना कथमिति सहृदया आनन्दमनुभवन्ति ?

'अप्सरः सम्भवैषा' इत्येतावता लौकिकवाक्येन, 'न प्रभातरल' मिति दृष्टान्तसमर्थितपदावल्या जनितः प्रमोदः, कथमपि लब्धव्यः ? पतिगृहं व्रजन्त्याः शकुन्तलायाः प्रकृतिप्रेमा, तपोवनस्यौदासीन्यं किमिव द्वितीये पद्ये चित्रितमिति सुधीभिरेव विभावनीयम् । परतस्तृतीये पद्ये वासन्ती मर्मभिद्भिः पदै रामं वेदनया निःश्वासयन्ती सहृदयान् सीतासहानुभूतिपरान् किमिव तनुते ? इति लोकोत्तरचमत्कारवत्तया वाक्यानामेषां काव्यत्वं समुपपन्नम् ।

'काव्यदीपिका'ऽभिधानाया अस्याः पुस्तिकाया विभागः 'शिखा' शब्देनैव विधीयमानो मनोरमः । दीपे शिखा भवति । रूपकं साधु निर्वाहितम् । अत्र प्रकरणे काव्यं निरूपितम् ।

इति काव्यदीपिकायाः स्नेहवर्षिण्यां व्याख्यायां प्रथमः कल्पः ।

# द्वितीयशिखा ।

प्रथमशिखायामिष्टार्थव्यवच्छिन्नस्य वाक्यस्य काव्यत्वे प्रतिपादिते, किंस्वरूपमिदं वाक्यमिति जिज्ञासिते तद्रूपमाह—

अन्वितैकार्थबोधे तु वाक्यं पदसमुच्चयः ।

पदानां प्रत्येकं सार्थकत्वेऽपि तेषामर्थो नान्वितः; वाक्यन्तु तदन्तर्गतपदार्थसमुदितमेकमर्थं बोधयति । यथा—'जननी सुताननं सस्नेहमीक्षते' ।

अन्वितस्य—अन्वयेन पारस्परिकसम्बन्धेन युक्तस्य, एकस्य-समुदितस्य, अर्थस्य-प्रतिपाद्यपदार्थस्य, बोधे-ज्ञाने, (समर्थ इति शेषः) पदानां सुबन्त-तिङन्त-शब्दानां, समुच्चयः—समुदायः, एकाधिक सङ्ख्यावत्त्वमिति यावत्; वाक्यं भवति । पदेषु आकांक्षा-योग्यताऽऽसत्तीनां

त्रयाणामपि सद्भावः; तदभावे तु अन्वितार्थस्य सर्वथाऽनुपपत्तिः । अतो "वाक्यं स्याद्योग्यताऽऽकांक्षाऽऽसत्तियुक्तः पदोच्चयः" इति फलितम् । "एकतिङ् वाक्यम्" इति लक्षणे तिङ्शब्दः क्रियापरः । एकत्वमुपलक्षणम् ; एकेन तिङन्तेन-क्रियया-इति यावत्, तु अवश्यं भवितव्यं, यथासम्भवमधिकेनापि । तेन 'आयाति याति हसति श्वसिति क्षणेन सा' इत्यादि युक्तम् । पदानामिति- । पदानि सार्थकानि तु सन्ति, किन्तु तेषामर्थोऽन्वितः-परस्परसम्बद्धो नास्ति । इति-'गौर्ज्ञानं दिवा वनम्' इत्यादावनन्विते न वाक्यत्वम् । किन्तु तान्येव यदा वाक्ये यथान्वयं निबद्धानि भवन्ति तदा तदेव वाक्यं तदन्तर्गतानां-वाक्यमध्यपातिनां, पदार्थानां समुदितं-यथान्वयं समुदाये मिलितमर्थं प्रकाशयति । तदुदाहरति जननीति । जननीकर्तृक-पुत्रावयवीभूतमुखकर्मक-स्नेहविशिष्टविलोकनक्रियारूपः समुदितार्थो बोध्यते । इति बहुपदघटितवाक्यस्योदाहरणम् । पदद्वयनिबद्धस्यापि 'हरिः शेते' प्रभृत्यवगन्तव्यम् ।

ननु वाक्ये समुल्लिख्यमानं पदमेव किं वस्तु ? तदेव प्रदर्शयति—

"सुप्तिङन्तं पदं" प्राह पाणिनिर्मुनिसत्तमः ।

सुबन्तः तिङन्तश्च शब्दः पदम् । यथा 'रामः' 'भवति' इत्यादि ।

सुप्तिङ्विभक्त्यन्तः । स्पष्टम् । कियन्तः, अमुमेवार्थं 'प्रयोगार्हमन्वितैकार्थबोधकं वर्णं वर्णसमुदायं वा पदं' लक्षयन्तो विशदयन्ति ।

सम्प्रतिकाव्यस्य शरीरस्वरूपेणाभिमतयोः शब्दार्थयोर्विभागान्दर्शयति--

शब्दः पुनस्त्रिविधः, यथाह मम्मटभट्टः—

"स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।"

अर्थोऽपि शब्दप्रतिपाद्यस्त्रिविध एव,-वाच्यः, लक्ष्यः, व्यङ्ग्यश्च ।

" वाच्यादयस्तदर्थाः स्युः मम्मटेन यथोदिताः "

अत्र साहित्यशास्त्रे शब्दस्य भेदत्रयं भवति । वक्ति—अभिधया शक्त्या अर्थं बोधयति, इति वाचकः । ( लक्षितः ) लक्षणया शक्त्या निष्पन्नोऽर्थः, लाक्षणिकः । व्यनक्ति-व्यञ्जनया शक्त्या अर्थं प्रतिपादयतीति व्यञ्जकः । इति शब्दभेदाः । अर्थभेदास्तु-उच्यते ( अभिधावृत्त्या ) यः स वाच्यः । लक्ष्यते ( लक्षणया ) यः स लक्ष्यः । व्यज्यते ( व्यञ्जनया वृत्त्या ) यः स व्यङ्ग्यः । इति त्रयः मम्मटेन-काव्यप्रकाश-कारेण' उदिताः—प्रतिपादिताः ।

शक्तित्रयं निरूपयति—

"साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः ।"

साक्षात्सङ्केतितस्तु 'अस्मात् शब्दादयमर्थो बोद्धव्यः' इति शब्दस्य स्वाभाविक्या शक्त्या व्याकरणादिना वा नियन्त्रितः । इयमेव शक्तिः 'अभिधा' इत्युच्यते । अनया बोध्योऽर्थो वाच्यः । स च साक्षात् बोद्ध्यत्वेन मुख्यार्थः' इत्यप्यभिधीयते । यथा गो शब्दोऽभिधया गलकम्बलादिमज्जीवविशेषरूपं, पाचकशब्दश्च पाक-कर्तृरूपश्चार्थं साक्षात् बोधयति ।

साक्षात्—झटिति, परम्परासम्बन्धं विनैव, सङ्केतितं—शब्दे नियमितम्, रूढमित्यर्थः । यः शब्दः, अर्थं-प्रतिपाद्यम्, अभिधत्ते-वक्ति स वाचकः । सङ्केतितः, भाषाविद्भिर्निर्धारितः—सनातनो नियमितः, स्वाभाविक्या-स्वतः सिद्धया, शक्या-वृत्या, व्याकरणादिना—तदुक्तम् । "शक्तिग्रहं व्याकरणोपमान कोशाप्तवाक्याद्व्यवहारतश्च । सान्निध्यतः सिद्धपदस्य वृद्धा वाक्यस्य शेषाद्विवृतेर्वदन्ति ॥" नियन्त्रितः—नियमितः, निर्धारित इति यावत् । इयमेव-वाच्यार्थप्रतिपादिनी इत्यर्थः, 'अभिधा' अभिधीयते अनया वृत्त्या इति तदभिधेया वृत्तिः उच्यते । अनया-अभिधया, बोध्यः—प्रतिपाद्यः, वाच्योऽर्थः । साक्षात्-अविलम्बेन, वृत्त्यन्तरवद्विशेषप्रकृतिपर्यालोचनव्यतिरेकेणैव अव्यवधानेन—बोद्धव्यत्वेन-

प्रतिपाद्यत्वेन, प्रधानतया—स्वतः सिद्धतया प्रयोजनादिसाहाय्याग्रहणेन च मुख्यतया 'मुख्यार्थः' इत्यपि नामान्तरम् । गोशब्दः, आप्तवाक्यात् कोशाद्वा नियमितो गलकम्बलादिमन्तं प्राणिविशेषं बोधयति—एवं पचति पाकं करोतीति पाचकः कर्तरि ण्वुला निष्पन्नः व्याकरणनियमेन नियन्त्रितः प्रकृतार्थं बोधयति । अतः इयम् ईश्वरोद्बोधिता मुख्यभूता अभिधा शक्तिः ।

अभिधामभिधाय लक्षणां लक्षयति ।

लक्षणयाऽर्थबोधकः शब्दो लाक्षणिकः, तया बोध्योऽर्थो लक्ष्यः ।
" मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते ।
रूढेः प्रयोजनाद्वाऽसौ लक्षणा शक्तिरर्पिता ॥ "

( विश्वनाथः )

मुख्यार्थस्यान्वयानुपपत्तिग्रहे तदर्थसम्बन्धोऽन्योऽर्थो रूढिप्रयोजनयोरन्यतरस्मिन् हेतौ सम्भवति यया प्रतीयते सा वृत्तिर्लक्षणा नाम । रूढिः—प्रसिद्धिः, यथा—'कलिङ्गः साहसिकः' इत्यत्र कलिङ्गशब्दो देशविशेषरूपे स्वाभिधेयेऽर्थेऽसम्भवन् तद्देशवासिनः पुरुषान् बोधयति । प्रसिद्धिश्चात्र हेतुः ।

सूर्य्यप्रकाशयोरिव नित्यसम्बद्धयोः शब्दार्थयोर्नास्ति पृथगुपस्थितिः । तयोः सम्बन्धः बोध्यबोधकभावरूपः । शब्दो बोधकः, अर्थो बोध्यः । एवं लक्षणावृत्त्या अर्थप्रतिपादकः लाक्षणिकः शब्दः । लक्षणया प्रतिपाद्यो लक्ष्योऽर्थः । मुख्यार्थेति । मुख्यार्थस्य-वाच्यार्थस्य, बाधे-अन्वयासङ्गतौ, तेन—मुख्यार्थेन, युक्तः—सम्बद्धः, अन्यः वाच्यार्थादतिरिक्तः, अर्थः—पदार्थः, रूढेः—प्रसिद्धेः, प्रयोजनात्—विशेष-प्रतिपादन-रूपोद्देशात्, वा—अनयोरन्यतरस्माद् हेतोः, यया शक्त्या प्रतीयते—बोध्यते, सा अर्पिता-अन्यार्थाय समर्पितस्वार्था, शक्तिः—वृत्तिः, लक्षणा-लक्ष्यते

अर्थोऽनया सा, नाम भवति। रूढावुदाहरति—कलिङ्गः—तदाख्यो देशः, ( उत्कलः ) साहसिकः—सहसा करोतीति, भीमकर्मेत्यर्थः। इह साहसिकता प्राणिनि एव सम्भवति, देशविशेषरूपे निर्जीवे कलिङ्गे न सम्भवति, अतोऽन्वयलाभाय कलिङ्गस्य देशविशेषरूपं मुख्यार्थं बाधत्वा तत्संयुक्तान् कालिङ्गिकान् पुरुषान् प्रसिद्धतया ज्ञापयतीति रूढिमूला लक्षणा।

रूढिमूलामाकलय्य प्रयोजनमूलां लक्षणां ब्रूते—

'गङ्गायां घोष' इत्यत्र च गङ्गाशब्दः प्रवाहविशेषरूपं स्वाभिधेयमर्थं बोधयितुमसमर्थः सामीप्यसम्बन्धसम्बन्धिनं तटं बोधयति। हेतुश्चात्र शीतत्वपावनत्वातिशयबोधनरूपं प्रयोजनम्।

"उपकृतं बहु तत्र किमुच्यते सुजनता भवता प्रथिता परम्।
विदधदीदृशमेव सदा सखे सुखितमास्व ततः शरदां शतम्॥"

इयं हि कश्चिदपकारिणं प्रत्युक्तिरिति मुख्यार्थस्यान्वयानुपपत्ते-र्वैपरीत्यसम्बन्धेन अपकारादिरूपमर्थं ज्ञापयति। अपकाराद्यतिशय-द्योतनश्चात्र प्रयोजनम्।

'गङ्गायां घोष' अत्र गङ्गाशब्दः गङ्गाप्रवाहपरः, तत्र घोषस्य-गोस्थानस्य, आधाराधेयभावसम्बन्धेन अन्वयो न घटते। अतस्तदसङ्गति-वारणाय लक्षणा मुख्यं प्रवाहरूपमर्थं निषेद्धय सामीप्यसम्बन्धेन तत्सम्बद्धं तटं बोधयति। शीतत्वपावनत्वाधिक्यसूचनमेव प्रयोजनमत्र मूलम्।

लक्षणा रूढिप्रयोजनरूपं हेतुद्वयमवलम्ब्यैव प्रवर्तते एतदन्तरेणापि लक्षणास्वीकारे सर्वत्र वस्तुतोऽसम्बद्धे 'अग्निना सिञ्चती'-त्यादौ योग्यता-विरहितेऽपि वाक्ये यस्य कस्यचित्सम्बन्धः स्वीकृतः स्यात्।

पदगतां लक्षणामुदाहृत्य वाक्यगतां व्याहरति–उपकृतमिति—। अपकारिणं प्रति कस्यचिदुक्तिः। हे सखे! ( सोल्लुण्ठं सम्बोधनम् )

बहु-सातिशयम्, उपकृतम्-उपकारः कृतः, त्वयेतिशेषः। तत्र-उपकार-विषये किमुच्यते? न किमपि। सर्वथावाचोऽविषयः। भवता परं-नितरां, सुजनता-सभ्यता, प्रथिता-प्रकटीकृता। ईदृशमेव कृत्यं विदधत् कुर्वन्, शरदां-वर्षाणां, शतं शताब्दीं यावत्। सुखितं सुखं यथा तथा, आस्व-वर्तस्व। ईदृशं कृतज्ञतापूर्णं वाक्यमपकारिणे जनाय न सर्वथा युज्यते। अतोऽन्वयसङ्गतये एषामुपकृतादीनां मुख्यार्था बाधिता वैपरीत्यसम्बन्धेन अपकृतादिषु निहिताः। प्रयोजनञ्चात्र अपकारिणोऽपकाराधिक्य प्रतिपादनमेव। अतः प्रयोजनमूला एकाधिकलाक्षणिकपदवत्तया वाक्यगताऽत्र लक्षणा।

लक्षणां विभजति—

इत्येवं सा द्विविधा रूढिमूला प्रयोजनमूला च।
सेयं पुनर्द्विधा स्यादुपादानं लक्षणश्चेति॥

उपादानलक्षणा, लक्षणलक्षणाचेति सा लक्षणा पुनर्द्विविधा।

उपादानलक्षणा—

स्वसिद्धये पराक्षेपेऽसावुपादानलक्षणा।

वाच्यार्थस्यान्वयसिद्ध्यर्थं लक्ष्यार्थस्य बोधने वाच्यार्थस्यापि उपादानादियमुपादानलक्षणा। यथा 'यष्टयः प्रविशन्ति' इत्यत्र यष्टीनां स्वतः प्रवेशक्रिययाऽन्वयासम्भवात् प्रवेशान्वयार्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते अत्र च स्वार्थस्यापरित्यागात् इयम् 'अजहत्स्वार्था' इति च कथ्यते।

लक्षणलक्षणा—

परार्थमात्रबोधे तु भवेल्लक्षणलक्षणा।

सर्वथा स्वार्थपरित्यागे नान्यार्थमात्रबोधने इयं लक्षणलक्षणा।

अत एवासौ 'जहत्स्वार्था' इति च भण्यते। यथा पूर्वोदाहृते— 'उपकृतं बहु तत्र' इत्यादौ।

इत्येवं—पूर्वोक्तरीत्या, रूढिमूला प्रयोजनमूला चेति द्विप्रकारा सा लक्षणा, लक्षणं-किमपि सम्बन्धरूपं चिह्नम्, उपादानं-स्वस्यांशतया ग्रहणं च निमित्तीकृत्येति शेषः। पुनर्द्विविधा सती मिलित्वा चतुष्प्रकारा जाता इत्यर्थः। स्वसिद्धय इति-स्वस्य-मुख्यार्थस्य, सिद्धये-अन्वय-सङ्गतये, परस्य-तत्सम्बद्धस्य लक्ष्यार्थस्येत्यर्थः। आक्षेपे-आक्षिप्य ग्रहणे (आत्मनोवाच्यस्योपादानादिति भावः। उपादानलक्षणा भवति। यथा-'यष्टयः-लगुडानि प्रविशन्ति-अन्तर्गच्छन्ति' अत्र गतेश्चेतनधर्म-तया अचेतनानां यष्टीनां स्वतः प्रवेशः सर्वथा प्रतिषिद्धः। नहि कदाचिदेवं यष्टिकर्तृकप्रवेशनक्रियाया अन्वयः सम्भवी; अतः प्रवेशान्वयसिद्धये लगुडधारिणः पुरुषा आक्षिप्ताः, किन्तु मुख्यार्थस्य यष्टिरूपस्योपादानेन उपादानलक्षणा। स्वार्थस्य-वाच्यार्थस्य, अपरित्यागात्-सम्बन्धात्, न जहत्-न त्यजन्, स्वार्थो यां सा 'अजहत्स्वार्था' इत्यपि नामान्तरम्।

परार्थैति। परार्थमात्रस्य लक्ष्यस्यैव इत्यर्थः नतु अभिधेयस्यार्थस्य (मात्रशब्दो व्यवच्छेदकः) बोधे ज्ञाने सति, लक्षणेन-यत्किञ्चित्सम्बन्ध-मात्रेण चिह्नेन, लक्षणा 'लक्षणलक्षणा' भवति। जहन् स्वार्थो यां सा 'जहत्स्वार्था' अपि नामान्तरम्। यथा—उपकृतमिति। अत्र उपकृतादि शब्दाः स्वार्थं सर्वथा त्यजन्तः, अपकृतादिषु लक्ष्यार्थेषु आत्मानमाक्षि-पन्ति। इति जहत्स्वार्था।

लक्षणां संलक्ष्य व्यञ्जनां व्यनक्ति—

व्यञ्जनयाऽर्थबोधकः शब्दो व्यञ्जकः। तया बोद्धयोऽर्थो व्यङ्ग्यः।

"विरतास्वभिधाद्यासु ययार्थो बोध्यते परः।
सा वृत्तिर्व्यञ्जनानाम शब्दस्यार्थादिकस्य च॥"

(विश्वनाथः)

अभिधायां लक्षणायाञ्च स्वंस्वमर्थं बोधयित्वा विरतायां ययाऽपरोऽर्थो बोध्यते सा वृत्तिर्व्यञ्जना नाम । शब्दवदर्थोऽपि अर्थान्तरव्यञ्जकः इति प्रथमतो द्विविधा व्यञ्जना । शाब्दी आर्थी च ।

शाब्दी च द्विधा—अभिधामूला लक्षणा मूला च । यथाह विश्वनाथः—

" अभिधा-लक्षणा-मूला शब्दस्य व्यञ्जना द्विधा । "

व्यञ्जनया शक्त्या अर्थबोधकः शब्दः व्यनक्तीति व्यञ्जकः कर्तृरूपः । तया च बोध्यो—ज्ञाप्योऽर्थो, व्यज्यते इति व्यङ्ग्यः । का पुनः सा शक्तिः ? शृणोतु—विरतेति—। अभिधाद्यासु—अभिधा—लक्षणातात्पर्य्यवृत्तिषु विरतासु स्वं स्वमर्थं बोधयित्वा क्षीणासु, यया, वृत्त्या, अपरः—वृत्तित्रयाऽबोध्यः, अर्थः बोध्यते—ध्वन्यते, सा व्यञ्जना नाम वृत्तिः । शब्दस्य—शाब्दी, अर्थस्य—आर्थी । ननु शब्दोऽर्थं व्यक्तुं प्रभवति नार्थमर्थः, इति नाशङ्कनीयम् । 'प्रातर्जातम्' इति प्रभातभवनरूपेणार्थेन—'सपदि शय्याऽपहरणीया' इत्याद्यनेक—विधार्थान्तरावगतेः । इत्यत आह—अर्थोऽपि, अर्थान्तरस्य—अन्यस्यार्थस्य, व्यञ्जकः—अवगमकः । शब्दस्य वाचकतया लाक्षणिकतया तदाश्रया व्यञ्जनाऽपि द्विभेदा—अभिधामूला लक्षणामूला च ।

इदं तत्वम्—'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' किञ्चिदेकवारं सम्पाद्य विरतानि शब्दादीनि न पुन र्व्यापारान्तराय प्रभवन्तीत्यर्थः । एवं 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति' इति सिद्धान्तः । अथ 'गङ्गायां घोषः' अत्र गङ्गापदेन 'भगीरथरथखातावच्छिन्नं प्रवाहं,' घोष पदेन 'गोस्थानं' सङ्केतसिद्धमर्थमभिधाय विरतायामभिधायाम्, अभिहिताऽन्वयवादिसम्मतायां तात्पर्य्यशक्त्यां 'गङ्गाधिकरणकघोष'—रूपार्थं च बोधयित्वा नष्ट—वलायाम्, परस्पर सम्बन्धानुपपत्तौ च लक्षणायां 'गङ्गातटे घोषः' गङ्गापदेन तटं लक्षयित्वा क्षीणायाम्, वृत्त्यन्तरासाध्यसिद्धाय शीतत्वपावनत्वातिशयबोधनाय अवश्यं व्यञ्जना नाम तुरीयावृत्तिः स्वीकर्तव्या । इति संक्षेपः ।

अभिधामूलां व्यञ्जनां प्रतिपादयति—

"अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।

एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया ॥"

( विश्वनाथः )

संयोगाद्याश्च—

"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता ।

अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।

शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥"

अनेकार्थस्य-विविधार्थकस्य, शब्दस्य संयोगाद्यैः-वक्ष्यमाणैः, एकत्रार्थे नियन्त्रिते-नियमिते-परिसङ्ख्याते, अन्यधीहेतुः-अन्यार्थबोधकारणीभूता व्यञ्जना अभिधा-आश्रयो यस्याः सा । संयोगः-परस्परसंसर्गः प्रसिद्धसम्बन्धः, विप्रयोगः-पृथग्भवनम्, साहचर्यं-सहस्थितत्वम्, विरोधिता-वैरम्, अर्थः-प्रयोजनम्, प्रकरणं-प्रसंगः, लिङ्गम्-अन्यव्यावर्तकश्चिह्नविशेषः, अन्यस्य शब्दस्य सन्निधिः-शब्दान्तरसमभिव्याहारः, सामर्थ्यं-क्षमता, औचिती-योग्यता, देशः-स्थानम्, कालः-अवसरः, व्यक्तिः-पुंस्त्वादिलिङ्गम्, स्वरादयः-उदात्तादयः, एते शब्दाभिप्रायस्य, अनवच्छेदे-अनिर्णये, विशेषस्मृतेः-विशेषार्थस्मरणाय, हेतवः-निमित्तानि, भवन्तीति शेषः। संयोगादीनां विशेषस्मृतिहेतुत्वमुदाहरणेन प्रकाशयति—

यथा 'सशङ्खचक्रो हरिः' इति शङ्खचक्रयोगेन हरिः—विष्णुः । 'फणहीनो नागः' इति फणवियोगेन नागः—सर्पः । 'रामलक्ष्मणौ' इति लक्ष्मणसाहचर्य्येण रामः-दाशरथिः । 'रामार्जुनौ' इत्यत्र विरोधितया रामः—भार्गवः, अर्जुनः कार्तवीर्य्यः । अर्थः—प्रयोजनम्,

यथा—'स्थाणुं भज भवच्छिदे' इति भवच्छेदरूपप्रयोजनसम्बन्धेन स्थाणुः—शिवः, न तु शाखाविहीनो वृक्षः। प्रकरणं—प्रस्तावः, यथा—'यथाज्ञापयति देवः' इति देवः—भवान्, राजा वा। लिङ्गं—विशेषकं चिह्नम्; यथा 'कपर्दी भीमः' इति कपर्देन विशेषकेण भीमः—शिवः। अन्यस्य—प्रसिद्धार्थकस्य, शब्दस्य सान्निधिः—समभिव्याहारः, यथा 'स्थलारविन्दश्रियम्' इत्यत्र स्थलारविन्दसान्निधानेन श्रीः—शोभा। सामर्थ्यं शक्तिः, यथा—'मधुना मत्तः पिकः' इति मधुः— वसन्तः तस्यैव कोकिलमादने सामर्थ्यात्। औचिती—युक्तता, यथा—'गौरेकातु मनास्विनः, इत्यत्र औचित्येन गौः—वाक्। 'भाति गगने चन्द्रः' इति गगनरूपेण देशेन चन्द्रः—शशाङ्कः। 'रात्रौ विभावसुः, इति विभावसुः—वह्निः, दिवसेतु सूर्य्यः, व्यक्तिः—स्त्रीपुंस्त्वादिकम्, यथा—'मित्रं भाति' इति नपुंसलिङ्गेन मित्रं बन्धुः, 'मित्रो भाति' इति मित्रः—सूर्य्यः। स्वराः—उदात्तादयो वेद एव प्रसिद्धाः।

उदाहरणानि वृत्तावेव सप्रपञ्चं स्फुटीकृतानि, केवलमनेकार्थानामत्रप्रयुक्तानां पदानां कोषादनेकार्थत्वं प्रदर्शयितुं संग्रहः प्रस्तूयते। हरिरिति-"यमाऽनिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥" नाग इति-'नागस्तु सर्प-हस्तिनोः'। राम इति-"रामः पशुविशेषे स्यात् जामदग्न्ये हलायुधे। राघवे चासिते श्वेते मनोज्ञेऽपि च वाच्यवत्।।' अर्जुन इति-" अर्जुनो धवले वृक्षे तथा मध्यमपाण्डवे॥" स्थाणुरिति-"स्थाणुर्ना ध्रुवः शङ्कुः"-'स्थाणुरुद्र उमापतिः।' देव इति-"देवो मेघे सुरे राज्ञि"। भीम इति-" भीमो भयानके रुद्रे पाण्डुपुत्रे-"। श्रीरिति-" शोभासम्पत्तिपद्मासु लक्ष्मीश्च श्रीरिवेष्यते।" —मधुरिति-" मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे। वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति॥" गौरिति—

"गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयी दृग्बाग्भू-स्वप्सु भूम्नि च ॥" चन्द्र इति-'विधुकर्पूरयोश्चन्द्रः—" मित्रमिति "मित्रं सुहृदि मित्रोऽर्कः" इति कोशाः ।

इत्थं संयोगादिभिरेकस्मिन्नर्थे नियमिते— अर्थान्तरबोधन-प्रतिरोधेन तन्मात्रे एव व्यवस्थापिते, ययाऽर्थान्तरं बोध्यते सा अभिधामूला व्यञ्जना । यथा—

"कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज ॥

( कुमारसम्भवम् )

"आच्छादितायतदिगम्बरमुच्चकै र्गा-
माक्रम्य संस्थितमुदग्रविशालशृङ्गम् ।
मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥" ( माघः )

इत्थं—पूर्वोदाहृतदिशा, अनेकार्थस्य पदस्य प्रकरणादिभिरेकस्मिन्नर्थे नियन्त्रिते परस्मिन् प्रतिरोधिते यया वृत्त्या नियमेन व्याहतमपि अर्थान्तरं ( सङ्केतितमेवेति भावः ) बोध्यते सा अभिधाश्रया व्यञ्जना ।

शिवसमाधिभङ्गाय प्रतिष्ठासौ मदने असामयिकवसन्तप्रादुर्भाववर्णनम्—कुबेरेति । उष्णाः—ग्रीष्माः, रश्मयः—किरणाः, यस्य तस्मिन् सूर्ये, अन्यत्र साहसशालिनि नायके; समयं—दक्षिणायनकालम्, अपरत्र समुदाचारम्; विलङ्घ्य—अतिक्रम्य, कुबेरेण—धनपतिना, कुत्सितकायेन च; रक्षितां—पालिताम्, दिशम्—उदीचीं, स्त्रीत्वेन ध्वनितां काञ्चिन्नायिकाञ्च गन्तुं—सङ्गन्तु प्रवृत्ते—संलग्ने सति, दक्षिणा दिक् दाक्षिण्यवती नायिका च; मुखेन—दिङ्मुखेन, आननेन च, व्यलीकनिःश्वासमिव—व्यथोच्छ्वासमिव, गन्धवहं वायुम्, अन्यत्र पद्मिनीत्वेन सुरभिं निःश्वासम्;

उत्ससर्ज-मुमोच । इहवसन्तप्रकरणवशेन उष्णरश्मि-कुबेर-दक्षिणा-मुखानां सूर्य्य-धनपति-दिशाविशेष-प्रारम्भार्थेषु नियमने शब्दशक्त्या, व्यञ्जनयैव साहसिक-कुत्सितशरीरि-नायिका-मुखाद्यर्था अवगम्यन्ते । अतोऽत्र शब्दशक्तिमूलो वस्तुध्वनिः । उत्प्रेक्षालङ्कारः । उपजातिर्वृत्तिः ।

हस्तिनापुरं प्रति प्रस्थितस्य श्रीकृष्णस्य मार्गे आपतितस्य रैवतकगिरे वर्णनम्-आच्छादितेति। आच्छादितं-व्याप्तम्, आयतं-सुविस्तृतं, दिगन्तरं येन तम्; (गिरे वृषभस्य चोभयोरपि विशालतया) उच्चकैः-उन्नताम्, उन्नतञ्च, गां-पृथिवीम्, वृषभञ्च, आक्रम्य-आरुह्य, संस्थितं-विद्यमानम्, उदग्रम्-उन्नतं, विशालं विपुलाकृति, शृङ्गं-शिखरं विषाणञ्च यस्य तं, (शिवपक्षे वृषभे, विशेषणं योज्यम्) मूर्द्धि्न-कोटौ, शिरसि च स्खलन्ती, प्रसरन्ती, तुहिनदीधितेः-चन्द्रमसः, कोटिः-अन्तिमभागः, यस्य तम् । (एकत्र अत्युन्नततया अपरत्र चन्द्रशेखरतया) एनं नगेशं-रैवतकं, शिवञ्च, उद्वीक्ष्य-उत्पश्यन्, भुवि-जगति, को न जनो विस्मयते? सर्वं एव चमत्कृतो भवतीति भावः। अत्र पर्वतवर्णनप्रसङ्गवशेन भूमि-कोटि-शिखर-गिरि-रूपार्थेषु नियमितानां गो-शृङ्ग-मूर्द्ध-नगेश-शब्दानां यया वृत्त्या वृष-वृषाण-शिरः- शिवरूपार्थाः प्रतीयन्ते सा अभिधामूला व्यञ्जना ।

लक्षणामूलां व्यञ्जनामभिधत्ते—

लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।<br>
यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया ॥

उपास्यते—आश्रीयते, विधीयते इति यावत् प्रत्याय्यते—बोध्यते। यथा—'गङ्गायां घोषः' इत्यत्र प्रवाहविशेषरूपार्थबोधनाद्यभिधायां, तटरूपार्थबोधनाल्लक्षणायां च विरतायां यया शीतत्वपावनत्वातिशयरूपं प्रयोजनं बोध्यते, सा लक्षणामूला व्यञ्जना ।

यस्य-फलविशेषस्य,कृते लक्षणा वृत्तिः उपास्यते-स्वीक्रियते तत्प्रयोजनं

भवति। यया वृत्त्या पुनस्तत्प्रयोजनं बोध्यते सा लक्षणामूला व्यञ्जना। यथा 'गङ्गायां घोषः' अत्र सङ्केतितार्थमात्रबोधिकायाः अभिधायाः, अन्वयसङ्गतये तटार्थं बोधयित्वा विरतायाः लक्षणायाः शीतत्वाधिक्यबोधने नास्ति शक्तिः। व्यञ्जनयैव शक्यं तद्बोधनम्। न च लक्षणयैव प्रयोजनं लक्ष्यं, तस्याः प्रयोजनमुद्दिश्यैव प्रवृत्तेः, प्रयोजनस्य पुनर्लक्ष्यतया अनवस्थापातात्।

शाब्दीमभिधाय आर्थीं व्यञ्जनां प्रपञ्चयति—

" वक्तृबोद्धव्यवाक्यानां काकोश्चेष्टादिकस्य च।
वैशिष्ट्यादन्यमर्थं या बोधयेत्सार्थसम्भवा॥"

सा अर्थसम्भवा—आर्थी व्यञ्जनेति शेषः। यं पुरुषं बोधयितुं शब्द उच्चार्य्यते स बोद्धव्यः। काकुः—ध्वनेर्विकारः। वैशिष्ट्यात् विशेषयोगात्। यथा 'गतोऽस्तमर्कः' इति वाक्येन द्विजातौ वक्तरि प्रतिपाद्ये वा 'सन्ध्यावन्दनस्यायमवसरः' इति। गोपालबालके वक्तरि प्रतिपाद्ये वा 'संहियन्तां गावो गृहं प्रति निवर्तामहे' इत्यादिका अर्था वक्त्रादिवैशिष्ट्यात् प्रतीयन्ते। यथा वा—

"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥"
(वेणीसं०)

अत्र 'मयि न योग्यः खेदः कुरुषु तु योग्यः' इति काका प्रकाश्यते—

इति शब्दार्थनिरूपणं नाम द्वितीयशिखा।

वक्त्रिति— । वक्ता-प्रतिपादयिता, बोद्धव्यः बोध्यविषयीभूतः, मुख्यश्रोता, वाक्यं-पदसमूहः, तेषाम्, काकोः-ध्वनिप्रकारविशेषस्य, चेष्टादिकस्य-हस्तसञ्चालनादेश्च वैशिष्टयात्-विशिष्योक्तत्वात्, या अन्यां-वाच्यार्थादतिरिक्तमलक्ष्यमर्थं बोधयति सा, अर्थात् सम्भवो यस्याः सा आर्थी व्यञ्जना। एकमेव 'गतोऽस्तमर्कः' इति वाक्यं सूर्यादृश्यभावरूपान्मुख्यार्थात् अतिरिक्तं वक्तुर्बोद्धव्यस्य ब्राह्मणविषयीभूतत्वरूपवैशिष्ट्येन 'सन्ध्यामुपास्ताम्' इत्यर्थं, गोपालस्य च वक्तृत्वेन 'गा गेहं प्रस्थापय' इत्यादि मुख्यार्थभिन्नमर्थं बोधयति। इत्यार्थी व्यञ्जनाया एव प्रभावो बोधनीयः।

काकोरुदाहरणं प्रदर्शयति—तथेति। युधिष्ठिरस्यौदासीन्येन विमनसो भीमस्येयमुक्तिः सहदेवमुद्दिश्य। नृपसदसि-राजसभायाम्, (एतेनापमानस्य सर्वंजनसमक्षीभूततया दुःसहता द्योतिता) तथाभूतां-तादृशीमवस्थामापन्नाम्, आकृष्टपटामिति भावः। (अवस्थाया नाम्नानुच्चारिततया 'कथाऽपि खलु पापानामलमश्रेयसे यतः' इति सूचितम्) पाञ्चालतनयाम्-द्रुपदसुताम्, (इति राजकुलस्मारणेन द्रौपद्या अवमानः सर्वथाऽसह्य इति द्योतितम्) दृष्ट्वा-न तु परोक्षं श्रुत्वेत्यर्थः। कष्टमेकं कथमपि सोढव्यमपि निरन्तरं वर्षन्ति कष्टानि मानवीयहृदा कथं क्षन्तव्यानीति दुःखान्तरं दर्शयति,—वने-कण्टकव्याघ्रादिभि र्भयानके इत्यर्थः। वल्कलधरैः—असभ्यैरित्यर्थः। व्याधैः-किरातादिभिः समं सुचिरं-द्वादशवर्षाणि यावत्, उषितं—स्थितम्, पुनः, विराटस्य—मत्स्यराजस्य-आवासे—भवने, अनुचिते-याचकगोपालादिकर्मतया नितरां गर्हणीये, आरम्भे-कार्य्ये, निभृतं-'ननु न च' पदाभिधानमन्तरेण व्यासक्तं, बन्धुवर्गं दृष्ट्वा साक्षादनुभूय खिन्ने-सन्तप्ते, मयि-अस्मासु इत्यर्थः गुरुः-पूज्यो युधिष्ठिरः खेदं-शोकं भजति, अद्यापि-इयन्ति कष्टान्यनुभूय इयदवधि कुरुषु-दुर्योधनादिषु खेदं न भजतीत्यर्थः। अत्र आश्चर्य्यजनककाका उच्चारितेऽत्र 'मयि खेदो न योग्यः कुरुषु तु नितरां योग्यः' इति ध्वन्यते।

इति स्नेहवर्षिण्यां व्याख्यायां द्वितीयः कल्पः।

# तृतीया शिखा।

प्रथमं निरूपितस्य काव्यस्य ध्वन्यादीन् भेदानाचष्टे—

काव्यं ध्वनि र्गुणीभूतव्यङ्ग्यं चित्रमिति त्रिधा।

"वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम्॥"

यस्मिन्काव्ये व्यङ्ग्यार्थो वाच्यार्थादधिकचमत्कारी तन्नाम ध्वनिः।

काव्यम्—अलौकिकचमत्कारिणी पदावली, त्रिधा त्रिप्रकारम्, मतम्-इष्टम्। भेदानेव ब्रूते—१—ध्वनिः—वाच्यार्थाऽधिकचमत्कारि-व्यङ्ग्यः। २—गुणीभूतः—वाच्योपस्कारकतयाऽप्रधानीभूतो व्यङ्ग्योऽर्थो यत्र तत् गुणीभूतव्यङ्ग्यम्। ३ चित्रम् व्यङ्ग्यराहित्येऽपि अलङ्कारादिसत्तया चमत्कारि चित्रम्। एषु उत्तमकाव्यत्वप्रयोजकः को नाम ध्वनिः? तदाह—वाच्येति। वाच्यं—मुख्यम्, अभिधाबोध्यमर्थम्, अतिशयितुं-चमत्काराऽधिक्येनातिक्रान्तुं शीले, व्यङ्ग्ये व्यञ्जनावृत्या बोध्येऽर्थे सति ध्वनिः। ध्वन्यते-अनुरणनवत् सङ्केतितार्थबोधे जाते विशिष्टार्थो व्यज्यते अस्मिन्निति ध्वनिः। इत्येवं सचेतसामत्याह्लादजनकतया भेदत्रये प्रधानतमं काव्यं भवति।

ध्वनेर्भेदं व्याख्याति—

"भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ।
अविवाक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च॥"

(विश्वनाथः)

लक्षणामूलः, अभिधामूलश्चेति ध्वने र्द्वौ भेदौ, तौ च क्रमेण अविवाक्षितवाच्यः, विवाक्षिताऽन्यपरवाच्यश्चेति नामभ्यामपि व्यपदिश्येते।

तत्र अविवाक्षितं—बाधितस्वरूपं, वाच्यं यत्र सः अविवाक्षितवाच्यो नाम लक्षणामूलो ध्वनिः । लक्षणामूलत्वादेवात्र वाच्यमविवक्षितम् । स च द्विविधः—अर्थान्तरसङ्क्रामितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्च । यदाह विश्वनाथः—

"अर्थान्तरं सङ्क्रामिते वाच्येऽत्यन्तं तिरस्कृते ।
अविवाक्षितवाच्योऽपि ध्वनि र्द्वैविध्यमृच्छति ॥"

यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति, तत्र मुख्यार्थस्य स्वविशेषरूपेऽर्थान्तरे सङ्क्रामितत्वादर्थान्तरसङ्क्रामितवाच्यत्वम् । यथा—

"त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥"

अत्र वचनादि उपदेशादिरूपतया परिणमति, सम्बोध्ये आत्मीयभावाद्यतिशयश्च व्यङ्ग्यः ।

भेदाविति— । ध्वनेः—वाच्यातिशायिव्यङ्ग्यस्य, लक्षणाश्रयः, अभिधाश्रयः, इति द्वौ भेदौ, उदीरितौ—प्रतिपादितौ, आलङ्कारिकैरिति शेषः । अन्यः—लक्षणामूलः, अविवक्षितः—वक्तुमनिष्टः, अन्वयानुपपत्त्या बाधितस्वरूपः, वाच्योऽभिधेयो यत्र सोऽविवक्षिताऽन्यपरवाच्यः । मुख्यार्थबाधे एव प्रसक्ताया लक्षणाया इहाश्रयीभूतत्वात् । च पुनः, अभिधामूलः, विवक्षितोऽपि वाच्योऽन्यपरः—अर्थान्तरायत्तः यत्र तथाविधः ।

अर्थान्तरमिति— । अविवक्षितवाच्योऽपि—लक्षणामूलोऽपि ध्वनि र्द्वैविध्यं—द्विप्रकारताम्, ऋच्छति—प्राप्नोति । द्वैविध्यमेव विशदयति—वाच्ये—मुख्येऽर्थे, प्रकरणेऽनुपयोगित्वाद्धेतोरिति भावः । अर्थान्तरं—विशिष्टार्थं, सङ्क्रमिते—सङ्गते, परिणते, आच्छादितस्वरूपे

इत्यर्थः । सति अर्थान्तरसङ्क्रमितवाच्यः । अत्यन्तं—परमं, तिरस्कृते विशिष्टार्थबोधनाय नितरां तिरोहिते तिरस्कृतवाच्यध्वनिः । उदाहरति— । त्वामिति । अस्मि – अहम्, ( अस्मीति 'अहम्' इत्यर्थकमव्ययम् ) त्वां वच्मि—उपदिशामि, अत्र सदसि, विदुषां—विवेकिनां, समवायः-समूहः, वर्तते । तत्–तस्मात्, आत्मीयां—स्वीयाम्, आत्मनोऽनुकूलामिति भावः । मतिं—बुद्धिम्, आस्थाय स्वीकृत्य, स्थितिं विधेहि अत्र वर्तस्व । इह 'विधेही' ति आदेशक्रियायां सत्याम्, आदेष्टुरभिहितमन्यथैव सिद्धम् । पुन 'वच्मि' इति क्रियाया अनर्थकतावारणाय उपदिशामीत्यत्र परिणतिः । अतः मुख्यस्य वचनरूपस्य उपदेशरूपे विशिष्टाऽर्थे सङ्क्रमिते अर्थान्तर-सङ्क्रमितः स्फुटः । एतेन सम्बोद्धव्ये—बोद्धव्ये—आत्मीयभावस्य—स्वजनतायाः, अतिशयो व्यज्यते ।

अत्यन्ततिरस्कृतवाच्यं वक्ति—

यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरं बोधयति, तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम् । यथा 'उपकृतं बहु तत्र' इत्यादौ पूर्वमुक्ते । अत्राद्ये मुख्यार्थस्यार्थान्तरे सङ्क्रमणं प्रवेशः, न तु तिरोभावः । अत एवात्र अजहत्स्वार्था लक्षणा । द्वितीये–स्वार्थस्याऽत्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था लक्षणा ।

यत्र—लक्ष्ये, स्वार्थं—सङ्केतितार्थं, सर्वथा-सर्वांशेन, परित्यजन् अर्थान्तरं—व्यञ्जनाबोध्यम्, अन्वयसङ्गतये आक्षिप्यमाणं मुख्यार्थव्यतिरिक्तं, बोधयति तत्र वाच्यार्थस्य अत्यन्ततिरस्कृतत्वात्—लेशतोऽपि स्वीकृतत्वाभावात् अत्यन्ततिरस्कृतवाच्यत्वम् । यथा—उपकृतमित्यत्र व्याख्यातपूर्वे पद्ये—उपकृतादेः, अपकृतादौ परिणततया अपकाररूपप्रधानार्थस्य सर्वथाऽदृश्यत्वेन यदपकारातिशयो व्यज्यते तदत्यन्ततिरस्कृतवाच्यत्वम् । आद्ये-अर्थान्तरसङ्क्रमितरूपे भेदे मुख्यार्थस्य अन्यस्मिन्नर्थे केवलं प्रवेशः, नतु सर्वथाऽऽच्छादनम् अत एव अजहत्स्वार्था न जहत्

स्वार्थो यां सा लक्षणा । द्वितीये-अत्यन्ततिरस्कृतवाच्यरूपे स्वार्थस्य सर्वथा तिरोभावः । अतएव जहत्स्वार्था इयं लक्षणा ।

विवक्षिताऽन्यपरवाच्यं व्याख्याति—

"विवक्षितश्चान्यपरं वाच्यं यत्राऽपरस्तु सः ।"

( मम्मटः )

यत्र वाच्यं विवक्षितं—प्रकाशितस्वरूपं सत् अन्यपरं व्यङ्ग्यनिष्ठं सोऽपरः—विवक्षितान्यपरवाच्यो ध्वनिः। अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्याऽर्थस्य प्रकाशकः । यथा प्रदीपो घटस्य। स च द्विविधः— असंलक्ष्यक्रमव्यङ्ग्यः, संलक्ष्यक्रमव्यङ्ग्यश्च। यदाह स एव—

"कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ।"

न संलक्ष्यः—सम्यगनुभूयमानः, क्रमः—प्रतीतिक्रमो यस्य तादृशं व्यङ्ग्यं यस्मिन्सः असंलक्ष्यक्रमव्यङ्ग्यः सच रसभावादिः। अत्र व्यङ्ग्य-प्रतीते विभावादिप्रतीतिकारणकत्वात्क्रमोऽवश्यम् किन्तु उत्पल शतपत्र-व्यतिभेदवल्लाघवान्न संलक्ष्यते ।

विवक्षितमिति— । यत्र वाच्यम्-अभिधेयं वस्तु, विवक्षितं-वक्तुमिष्टं, प्रकाशितं सत्, अन्यस्मिन्-व्यङ्ग्ये, परम्-आसक्तम् सः अपरः— अभिधामूल इत्यर्थः । विवक्षितान्यपरवाच्यो नाम ध्वनिः। यथा प्रदीपः स्वरूपं प्रकाशयन्नेव घटं प्रकाशयति तथा विवक्षितान्यपरवाच्ये स्वयं प्रकाशित एव वाच्यार्थो व्यङ्ग्यार्थं प्रकाशयति। तद्यथा 'सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः' इति रावणस्य निर्वेदवचने—सोऽपि—तापसोऽपि ('अपि' शब्देन तुच्छता सूच्यते) अत्रैव—राजधान्यां लङ्कायामेव नतु अन्यत्र ('एव' शब्दस्तस्य साहसिकतां वक्तुरसहनीयतां द्योतयति) निहन्ति निःशेषेण हन्ति, राक्षसकुलं नतु द्वित्रान्, अहो ! महान् खेदः रावणः—रावयति जनानिति विश्वविदितवीरः, जीवति इयदवधि प्राणिति'

अत्र 'अपि' 'एव' 'रावणः' इत्यादिपदानि वाच्यार्थं बोधयित्वैव व्यङ्ग्यार्थं प्रकटयन्ति।

कोऽपीति—कोऽपि-अपूर्वः, अपरिमेयः। अलक्ष्यः-अबोध्यः-स्फुटतयाऽप्रतीयमानः, क्रमः-प्रतीतिशृङ्खला, यस्य तादृशं, व्यङ्ग्यं-व्यञ्जनाबोध्यवस्तु यस्मिन् सः-असंलक्ष्यक्रमव्यङ्ग्यः (प्रथमो भेदः) ईदृशो ध्वनिः रसभावादिरेव। तत्रार्थप्रतीतिसमकालमेव साक्षादिवानुभूयमानतया प्रतीतिक्रमो न स्फुटः। अत्रेति-। इदं तात्पर्य्यम्। ननु 'कार्य्यनियतपूर्ववृत्ति कारणम्' 'कार्य्यं प्रागभावप्रतियोगि' एवं कारणकार्य्यज्ञानयोरवश्यं पौर्वापर्य्यमिति वाच्येन-विभावादिरूपेण कारणीभूतेन सममवश्यं कार्य्यभूतस्य व्यङ्ग्यस्य रसादेः प्रतीतिक्रमः, इति चेत्सत्यम्। अलक्ष्येत्यत्र 'अनुदरा कन्या' वत् अल्पार्थको नञ्। एवं क्रमः सन्नपि नानुभूयमान इत्यर्थः। कमलस्य (कोमलतातात्पर्य्येण) शतस्य पत्राणां भेदे यथाऽवश्यं भवन्नपि क्रमो नानुभवगम्यः, तथाऽत्रापि बोध्यमिति भावः।

अलक्ष्यक्रमव्यङ्ग्यप्रकरणे प्राप्तावसरः सङ्कलयिता काव्यात्मभूतं रसं ("साधुपाकेऽप्यनास्वाद्य भोज्यं निर्लवणं यथा। तथैव नीरसं काव्यमिति ब्रूमो रसान् क्रमात्") निरूपयितुमुपक्रमते—

अथ कोऽयं नाम रसः? के च विभावादयः? इत्याहुर्मम्मट भट्टपादाः—

"कारणान्यथ कार्य्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेत्काव्यनाट्ययोः॥
विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः॥"

लोके-लौकिक व्यवहारे, स्थायिनः-स्थिरीभूतस्य, रत्यादेः—अनुरागादेः, आदिपदेन हासशोकोत्साहादीनां ग्रहणम्। यानि कारणानि अनुरागादिहेतवः, आलम्बकाः—उत्पादकाः, नायकादयः, उद्दीपकाः-उद्बर्धकाः,

तच्चेष्टादयश्चन्द्रचन्दनरोलम्बादयश्च द्विविधानि कारणानि । कार्य्याणि-अनुरागादिजन्यानि भावहावादीनि स्तम्भस्वेदादीनि च । सहकारीणि अनुरागादौ साहाय्यविधायकानि निर्वेदावेगादीनि । यानि सन्ति तान्येव यदा नाट्यकाव्ययोः—दृश्यश्रव्यकाव्ययोः, निबद्धानि-प्रतिपादितानि भवन्ति तदा तान्येव—( कारणानि ) विभाव्यन्ते इत्यादयः आस्वादाङ्कुरयोग्यत्वमानीयन्ते ते विभावाः । ( कार्य्याणि ) अनु-विभावालम्बितोद्दीपितस्थायिभावात् पश्चात् इति भावः भूतत्वात् अनुभावाः । ( सहकारिणः ) विशेषेण स्वभावजाद्यलङ्काररूपेण, आभिमुख्येन—परिपोषकत्वेन, चरन्ति-उपकुर्वन्ति स्थायिभावानिति व्यभिचारिणः । उच्यन्ते एते नामभिरुल्लिख्यन्ते काव्यविद्भिः । तैः-विभावानुभावसञ्चारिभावैः, व्यक्तः-दुग्धाम्लसंयोगाद् दधिवद्रूपान्तरपरिणतीकृतः स्थायिभावः—विरुद्धाऽविरुद्धभावैरनिरोधनीयः चर्वणाविषयो रत्यादिः, रसः-रस्यते आस्वाद्यते इति रसः, स्मृतः-उक्तः ।

तदेव वृत्तौ स्फोटयति—

रत्यादेरित्यादिपदेन हासोत्साहादयो गृह्यन्ते । लौकिके उत्साहादीनां वक्ष्यमाणानां स्थायिभावानां यानि कारणानि—उत्पादकरूपाणि नायकप्रतिनायकादीनि, उद्दीपनरूपाणि—नायकप्रतिनायकचेष्टादीनि, यानि कार्य्याणि—विपक्षाभिमुखगमनादीनि, यानि च सहकारीणि सहायभूतानि धृतिगर्वादीनि तानि नाट्ये काव्ये चेन्निबद्ध्येरन् क्रमेण विभावाः, अनुभावाः, व्यभिचारिणश्च कथ्यन्ते । तै र्विभावादिभिः व्यक्तः—स्फुटीकृतः—विलक्षणप्रतीतिविषयीकृतः इति यावत् स्थायीभावो रसः कथितः ।

विलासितानिवृत्तिपुरःसरं विद्यार्थिमनस उन्नत्यै शृङ्गाररसमादिममपि परित्यज्यन् वीररसं दृष्टान्तयति सङ्कलयिता । विलक्षणा-

अलौकिकी, या प्रतीतिः-बोधस्तद्विषयीकृतः । अयम्भावः—कारणकार्य्ययो-र्ज्ञानक्रमस्य जनक-जन्यभावेन पूर्वापरत्वेन मधुरभोजनज्ञानतज्जन्या-नन्दज्ञानयोरिवावश्यभावितयाऽपि कार्य्यकल्पस्य रसस्यास्वादकालेऽपि विभावादीनां प्रतीतिः । यतस्त एव विभावादयः, सितामरिचादिमेलना-त्तद्युक्तोऽपि तत्स्वादभिन्नतां यातः प्रपाणकरस इव रसोऽपि विभावादि-सम्मेलनात्मकः पुनरपूर्वतां गतः । रसस्य व्यक्तिस्तु विभावादिना, दीपेन गोचरीकरणकारणीभूतेन प्राचः स्थितस्य घटस्येव नहि भवति । किन्तु अम्लसंयोगेन दधिरूपतया व्यक्तीकृतदुग्धवद्भवति ।

नायकनिष्ठस्य रसस्य व्यक्तिविशेषनिष्ठतया पारिमित्येन, अनु-कर्तरिनायकनेपथ्यग्रहीतरि नटे निष्ठस्य लज्जादि दर्शकवैमुख्यादिविधायक-तया तत्परिहारेण दृश्ये नटाभिनयद्वारा, श्रव्ये शब्दार्थद्वारा प्रतिपादितैः आलम्बनविभावैर्नायकनायिकादिभिः, उद्दीपनविभावैः तत्सौन्दर्य्य-वसन्त-चन्द्रिकादिभिः; अनुभावैः-कार्य्यभूत-स्तम्भस्वेदादिभिः; सञ्चारिभिः-गुणकथनस्मृतिप्रभृतिभिः; ( व्यञ्जकैः ) भावनाऽऽख्यसंस्कारवलेन सहृदयानां दर्शकश्रोतॄणां हृदि दुष्यन्तशकुन्तलादिव्यक्तिविशेषपरिहार-पूर्वकसर्वसामान्यप्रकृतिपुरुषप्रतीतिपूर्वकं व्यङ्ग्याया रते र्यः परमानन्द-स्वरूपो युष्मदस्मदादिभावविस्मरणपुरःसरं ज्ञानस्वरूप आह्लादमयो य आस्वादः स एव चिन्मयो रसः । इयमेव विलक्षणा प्रतीतिः । एवं लोके दुःखकारणीभूतोऽपि वियोगादिः काव्यनाट्यसमर्पितो लौकिकाऽनुभव-व्यतिरेकेण केवलं प्रमोदमेव वितनुते । इति स्फुटं वैलक्षण्यम् । रसः-अलक्ष्यक्रमव्यङ्ग्यः । यद्यप्यत्र शब्दश्रवणानन्तरमर्थबोधस्ततो विभावादि-प्रतीतिः, अनन्तरं सहृदये भावनया विभावादिसंवलितचिदानन्दात्मक आस्वाद्यमानो रत्यादिः स्थिरो भावो रसतामेति । इति क्रमोऽवश्यमस्ति तथापि कार्य्याणामियतां कमलशतदल-भेदवत् निमेषमात्रसम्पन्नतया नैव क्रमप्रतीतिः ।

प्रसङ्गागतविभावादिलक्षणं सङ्गृह्यते—

'आलम्बनविभावोऽसौ यदालम्ब्य रसोद्गमः ।' यथा नायकनायकादि ।

'उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ।' वसन्त-चन्द्र-कोकिलस्वरादि । 'उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् । लोके यः कार्य्यरूपोऽसोऽनुभावः काव्यनाट्ययोः । भाव-हावादयः । 'विशेषादाभिमुख्येन चरणाद्व्यभिचारिणः ।' निर्वेदावेगादि । 'सजातीयविजातीयैरतिरस्कृतमूर्तिमान् । यावद्रसं वर्तमानः स्थायिभाव उदाहृतः । रति हासादि ।

सामान्यतो रसं निरूप्य तद्भेदान्प्रतिपादयति—

'आदिमो "हास्य-करुण-रौद्र-वीर-भयानकः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ काव्ये रसाः स्मृताः ॥"

तत्र आदिमः शृङ्गारः—

आदिमः । प्रकृतिपुरुषयोः सनातनसम्बन्धतया जगद्बीजीभूततया प्रथमः शृङ्गारः । सन्नायकनायिकाऽवलम्बितः, तद्गतसौन्दर्य्य—चन्द्र-वसन्तकोकिलाद्युद्दीपितः, तच्चेष्टित-कटाक्षाद्यनुभावितः, लज्जाहासादिसञ्चारितः, सामाजिकचेतसि आस्वादपदवीमारूढः, रत्याख्यः स्थायिभावः शृङ्गाररसत्वमापद्यते ।

उदाहरणं यथा—

"विवृण्वती शैलसुताऽपिभावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्य्यस्तविलोचनेन ॥"

( कुमारसम्भवम् )

उमामुखे लोचने व्यापारयति शिवे पार्वत्यास्तात्कालिकीमवस्थां वर्णयति । शैलसुताऽपि—पार्वती अपि, स्फुरद्बाल-कदम्बकल्पैः— विकसन्नवीननीपसदृशैः, अङ्गैः—गात्रैः, भावम्—अनुरागं, विवृण्वती—प्रकटयन्ती, पर्य्यस्ते—लज्जया निम्नीभूते, विलोचने—नेत्रे, यस्मिन्तेन, चारुतरेण—परममनोरमेण, मुखेन—वदनेन, साचीकृता—तिर्यक्कृता लज्जयेति भावः । तस्थौ-स्थिता । उपमासंसृष्टा स्वभावोक्तिः । उपजातिः । इह, शिवः—आलम्बनविभावः । पूर्ववर्णितो वसन्तः उद्दीपनविभावः, अङ्गेषु

रोमाञ्चादयः-अनुभावाः, साचीकृतत्वरूपलज्जा-व्यभिचारी भावः, तैः स्फुटीकृता पार्वतीगता रतिः, सहृदयैरास्वादिता शृङ्गाररसत्वमापन्ना।

हास्यरसः—

हास्यः। विदूषकादिहास्यकार्य्यावलम्बितो विकृताकृत्युद्दीपितो मुखभङ्गाद्यनुभावितः श्रमादिसहकारितः सचेतोभिश्चर्व्यमाणो हासः स्थायिभावः हास्यरसो भवति।

उदाहरति—

"भिक्षो! मांसनिषेवणं प्रकुरुषे'? 'किन्तेन मद्यं विना?'
'मद्यञ्चापि तव प्रियं?' 'प्रियमहो वाराङ्गनाभिः सह।'
'तासामर्थरुचिः कुतस्तव धनं!' 'द्यूतेन चौर्य्येण वा'
'चौर्य्यद्यूतपरिग्रहोऽपि भवतः?' 'नष्टस्य काऽन्या गतिः' ॥

विनोदिना भिक्षुणा कस्य चन पुरुषस्य प्रश्नोत्तरे—प्रष्टा पुरुषः—'भिक्षो-याचक! मांसनिषेवणं-मांसभक्षणं, प्रकुरुषे?' (द्रव्यहीनस्य तापसस्य ते नेदमुचितमिति भावः) भिक्षुः-'मद्यं—मदिरां, विना तेन-मांसेन किम्?' (त्वं केवलं मांसेन आः! चरसि! अहं तु मद्यमपि जिघृक्षुरस्मि।) पुरु०-'मद्यमपि—सुराऽपि, तव प्रियम्-इष्टम्?' भिक्षुः-'अहो'-तावदेव नहि किन्तु, वाराङ्गनाभिः-वेश्याभिः, बहुभिरिति भावः, सह मद्यं मम प्रियम्!' पुरुषः-'तासां-वारवनितानाम्, अर्थे-धने, रुचिः-अभिलाषः, तव भिक्षोरिति भावः, धनं कुतः कस्माद्, भविष्यति?' भिक्षुः-'द्यूतेन-अक्षक्रीडया वा तत्र विजयाभावेन धनेऽलब्धे चौर्य्येण-स्तेयेन, (धनं भविष्यति)' पुरुषः-भवतः-ईदृशमहिमशालिन इत्यर्थः (अतो युष्मत्पदं भवत्पदे काका परिवर्तितम्) चौर्य्यद्यूतस्य परिग्रहः-अवलम्बनम्, भिक्षुः-'नष्टस्य-भ्रष्टचरित्रस्य अन्या का गतिः? किमुपायान्तरम्?' शार्दूलविक्रीडितं वृत्तम्। अत्र विनोदी भिक्षुः विभावः, मांससेवनादिः-अनुभावः, त्वरितोत्तरदानरूपं चापल्यं व्यभिचारिभावः।

एतैः पोषितः स्थायी हासश्चर्व्यमाणो हास्यरसो जातः ।

करुणरसः—

करुणः । मृताद्यालम्बनकः, तद्गुणस्मरणतदीयवस्तुदर्शनाद्युद्दीपनकः, विलापाद्यनुभावितः, ग्लानिनिर्वेदादिव्यभिचारितः, शोकः स्थायिभावः सरसैरस्यमानः करुणो रसः ।

उदाहरणं यथा—

"अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः ।
मयि जातो दशरथात्कथमुञ्छेन वर्तयेत् ॥
यस्य भृत्याश्च दासाश्च स्वादून्यन्नानि भुञ्जते ।
कथं स भोक्ष्यते रामो वने मूलफलान्ययम् ॥"

( रामायणम् )

वनवासिनं राममुद्दिश्य कौशल्याया विलापः । अदृष्टम्—नानुभूतं, दुःखं-कष्टं येन सः, धर्मात्मा-सुकृती, सर्वेषां-भूतानां प्रियंवदः-मिष्टभाषी, दशरथात्-राज्ञो, मयि-राजमहिष्यामिति भावः । ( एतेन राजकुमारस्य कष्टानुभूतिः मर्मभेदिनीति व्यङ्ग्यम् ) ( रामः ) उञ्छेन-कणशः सञ्चयेन, कथं-केन विधेन, वर्तयेत्-जीवनं निर्वाहयेत् । यस्य भृत्याः-पोषणीयाः, दासाः-सेवकाः, स्वादूनि-रसनाप्रियाणि, अन्नानि-खाद्यानि, भुञ्जते सोऽयं रामः फलमूलानि कथं भोक्ष्यते महता कष्टेनैवेत्यर्थः । अत्र वनवासी रामः आलम्बनः, प्रियंवदतादिः-उद्दीपनो विभावः, विलापोक्तिः अनुभावः, उञ्छवर्तनादिजन्यग्लानिः सञ्चारी, एतै र्व्यक्तः शोकः चेतोवृत्तां करुणरसः सम्पन्नः । स्वभावोक्तिरलङ्कारः ।

रौद्ररसः—

रौद्रः । द्विषदालम्बितस्तदपकाराद्युद्दीपितो, बाहुस्फोटनाद्यनुभावित आक्षेपादिसञ्चारितः सामाजिकैरास्वाद्यमानः क्रोधो रौद्रो रसः ।

दृष्टान्तं प्रदर्शयति—

"कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभि निर्मर्य्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥"

( वेणीसं० )

पितुर्द्रोणस्य वधेन क्रुद्धस्याश्वत्थाम्नो गर्जितोक्तिः । यैः कैश्चित्, मर्य्यादायाः—युद्धधर्मव्यवस्थायाः, निष्क्रान्तैः-उल्लङ्घ्य गतैः । (निरादयः क्रान्ताद्यर्थे पञ्चम्या इति समासः ) निरस्त्रयोद्धृवधादिति भावः । अतएव मनुजपशुभिः-मानवनामधारिभिः, अविशेषेण पश्यद्भिः, उदायुधैः-उद्यतशस्त्रैः, भवद्भिः-पाण्डवैः, इदं-क्षणं घटितं, महापातकं-निरस्त्राचार्य-वधरूपं, कृतम्—अनुष्ठितम्, अनुमतम्-सम्मतम्, दृष्टं नरकरिपुणा-कृष्णेन, सहैव, भीमेन किरीटिना-अर्जुनेन सहितानां तेषां-पाण्डवपक्षाश्रितानां भवताम्, असृजा-रक्तेन, मेदसा-वसया, मांसेन-रक्तजपदार्थविशेषेण, दिशां बलिं-पूजां करोमि-त्वरितं रचयिष्यामि । हरिणीवृत्तम् अत्र पाण्डवाः-आलम्बनविभावः, पितृहननाद्यनुभावः, वक्तुर्गर्वामर्षादि व्यभिचारिभावः, तैः पोषितः क्रोध आस्वादकानां रौद्ररसो जातः ।

वीररसः—

वीरः । विजिताद्यालम्बनको बलादिसमुद्दीपितो द्विषदभिगमनाद्यनुभावितोऽस्खलाभादिसहचारितः सहृदयास्वाद्यमान उत्साहः स्थायिभावो वीररसत्वमेति । उदाहरति—

क्षुद्राः सन्त्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।

सौमित्रे ! तिष्ठ, पात्रं त्वमसि नहि रुषां, नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥

( महानाटकम् )

सङ्ग्रामभूमिमुपागतस्य मेघनादस्य गर्वोक्तिः।

क्षुद्राः-नीचाः पशुभूता इत्यर्थः, एते हरयः-कपयः, सन्त्रासं—मज्जन्यं भयम्, विजहत-दूरीकुरुत । क्षुद्रैः सह मादृशो वीरस्य युद्धं नहि शोभायै इति तात्पर्यात् । क्षुण्णः-विदारितः, शक्रेभस्य-इन्द्रगजस्य ऐरावतस्य, कुम्भः-शिरस्थलं, यैस्ते, अमी-मद्धस्तगताः, सायकाः—बाणाः, युष्माकं देहेषु-शरीरेषु, निर्बलेष्विति भावः । निष्पतन्तः-आक्रमन्तः, लज्जां-ह्रेपं, परं-नितरां, दधति-वहति । सौमित्रे ! लक्ष्मण ! तिष्ठ-निश्चलं वर्तस्व, ( कुतः ? ) त्वं रुषां-मत्कृतानां कोपानां, पात्रं-भाजनं नासि । अहं मेघनादः-( एतेन मेघवत् गर्जित्वा वच्मि ) इति सूच्यते । किञ्चित्-अल्पया ( किञ्चिदिति अव्ययपदम् ) भ्रूभङ्गस्य-भ्रूकुटीसञ्चालनस्य लीलया-विलासेन, नियमितो, सेतुना विवशीकृतः, जलधिः-समुद्रः येन तं रामम् अन्वेषयामि । तादृश एव वीरो युज्यते मया समं योद्धुम् । स्रग्धरावृत्तम् । इह, रामः-आलम्बनविभावः, क्षुद्रायमानसौमित्रिपरिहारो रामान्वेषणञ्चानुभावः, मेघनादपदोपादान-बोध्योगर्वः सञ्चारिभावस्तैः पोषितो मेघनादगतोत्साहः सामाजिकैश्च-र्व्यमाणो वीररसत्वमुपगतः । वीररसो दानवीरदयावीरतादिभेदेन त्रिविधः ।

भयानकरसः—

भयानकः । व्याघ्रादिभयदवस्त्वालम्बनकस्तद्गर्जनादिसमुद्दीपितः पलायनाद्यनुभावितः क्रन्दनादिसञ्चारितो भयस्थायिभावश्चर्व्यमाणो रसश्चे भयानको रसः । उदाहरणं यथा—

" नष्टं वर्षवरै र्मनुष्यगणनाऽभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।

पर्यन्ताश्रयिभि र्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥"

( रत्नावली )

रत्नावल्यां मर्कटवेषिणं वसन्तं वीक्षमाणानां भयातुराणां वर्षवरादीनां वर्णनम् । मनुष्येषु-पुरुषेषु, क्लीबत्वादिति भावः । गणनाभावात्-अगण्यभावात्, त्रपाम्-लज्जाम्, अपास्य-परित्यज्य, त्रासात् - भयात्, नष्टम्-इतस्ततः पलायितम् । ( पुंसामेव पलायने लज्जा भवतीति भावः ) अयं वामनः- खर्वः, कञ्चुकिनः- अन्तःपुरचारिणो वृद्धविप्रस्य, कञ्चुकस्य-कवचस्येत्यर्थः । अन्तः-मध्ये, ( लघुकायत्वात्तत्प्रवेशक्षमतेति बोध्यम् ) प्रविशति-प्रच्छन्नो भवति । किरातैः-वनेचरैः, पर्यन्तं-पुरप्रान्तं-श्रयितुं शीलैः । भयात्तत्र प्रसर्पद्भिरिति भावः । नाम्नः, किरं-प्रान्तदेशम्, अतन्ति-गच्छन्ति इति किराताः, इति, अन्वर्थकस्य नामधेयस्य सदृशम्-अनुकूलं कृतम् । कुब्जाः- पृष्ठदेशस्योन्नततया निम्नीभूताः, नीचतयैव-पुरुषपार्श्वे प्रच्छन्नतयैव आत्मनो निजस्य ईक्षणं-मर्कटकर्तृकं विलोकनम्, आशङ्कन्ते ये तैः, दृष्ट्वा अस्मान्व्यापादयिष्यन्तीति वेपमानाः, शनकैः-मन्दं, पदशब्दपरिहारपूर्वकं यान्ति । शार्दूलविक्रीडितं वृत्तम् । असम्बन्धेऽपि कञ्चुकिकञ्चुके प्रवेशः सम्बन्धः प्रतिपादितः । अतोऽतिशयोक्तिः । अत्र भयदमर्कटो विभावः, त्रासपदेन व्यक्तमुत्प्लवनादि कार्यमनुभावः । भीतानां त्रासादि सञ्चारिभावः । एतैः सामाजिकचेतसि स्वाद्यत्वमानीयमानः भयस्थायिभावो भयानकरसत्वमेति ।

बीभत्सरसः—

बीभत्सः । अहृद्यवस्त्ववलम्बितः पूयदुर्गन्धाद्युद्दीपितो मुखसङ्कोचनिष्ठीवनाद्यनुभावितो मोहगदादिसञ्चारितो जुगुप्सास्थायिभावः सामाजिकानां भावनया चेतोविषयीभूतो बीभत्सरसत्वं याति । तदुदाहरति--

"उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।

अन्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-

दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥”

( मालतीमाधवम् )

मालत्या अन्वेषाय सर्वतः परिभ्रमतो माधवस्य मुखेन श्मशानवर्णनम् । प्रेतरङ्कः— अधमयोनिविशेषः, प्रथमं-पूर्वं, कृत्तिम्-चर्म, ( अजिनं चर्म कृत्तिः स्त्री' इत्यमरः' उत्कृत्योत्कृत्य-छित्वा भित्त्वा, अथ- अनन्तरम्, पृथुभिः—विपुलैः, उच्छोथैः—फुल्लमांसैः, भूयांसि—बहुलीभूतानि, अंसे-स्कन्धप्रदेशे, स्फिचि- नितम्बे, पृष्ठपिण्डादौ च, अवयवेषु-अङ्गेषु, सुलभानि - सुखेन लब्धुं शक्यानि, उग्रा-आघ्रातुमशक्या, पूतिः-दुर्गन्धो येषु तानि, मांसानि जग्ध्वा-भुक्त्वा, अन्तः-मृतशरीरमध्ये, पर्य्यस्ते-सञ्चालिते, नेत्रे येन सः, प्रकटिताः-हर्षेण कटकटशब्दं कलयितुं दृश्यत्वमागताः, दशनाः-दन्ताः, यस्य तादृशः सन्, अङ्कस्थात्-क्रोडे स्थापितात्, करङ्कात्-कङ्कालात्, अस्थिसंस्थं-स्थूलशिरोलग्नं, स्थपुटगतम् —अस्थिसन्धिस्थितं, क्रव्यं-मांसम्, अव्यग्रम्—आस्वाद्य आस्वाद्य, अत्ति-भुङ्क्ते । स्रग्धरावृत्तम् । स्वभावोक्तिः । अत्र प्रेतालम्बितो दुर्गन्धाद्युद्दीपितो चर्मोत्कर्तनाद्यनुभावितः प्रकटितदशनतया सूचितेन हर्षेण सञ्चारितो जुगुप्सास्थायिभावो भावकानां भयानकरसत्वं गतः ।

अद्भुतरसः--

अद्भुतः । आश्चर्यजनकवस्त्ववलम्बकस्तद्वैचित्र्योद्दीपितो रोमाञ्च-नेत्रविकासाद्यनुभावितो वितर्कहर्षादिसञ्चारितो विस्मयः स्थायिभाव आस्वादकानामद्भुतरसो भवति । यथा—

“ मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः ।

न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥”

व्याख्यातपूर्वम् । अत्र शकुन्तला आलम्बनः, तपोवनादि तादृक्सौन्दर्यानर्हं स्थानम्-उद्दीपनो विभावः, विलासादिकम्-अनुभावः, औत्सुक्यं

वितर्कः, देवकन्येतिरूपः सञ्चारिभावः, एतैः पोषितः, कथंनु इति व्यङ्ग्यो विस्मयः सहृदयैश्चर्व्यमाणोऽद्भुतरसतामुपगतः ।

अथ रसे प्रधानीभूताः आस्वादनीयाः स्थायिभावाः के ? तान्-गणयति काव्यप्रकाशोक्तकारिकया—

"रति र्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा ।
जुगुप्सा विस्मयश्चैव स्थायिभावाः प्रकीर्तिताः ॥"

स्थायित्वं रसास्वादं यावन्निरन्तरप्राधान्येनोपस्थितत्वम् ॥ तदुक्तं धनञ्जयेन–'विरुद्धैरविरुद्धै र्वा भावै र्विच्छिद्यते न यः । आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः । "भावः भावकचेतसः स्थायिकार्य्यसहकारितया भावनम् । 'नानाऽभिनयसम्बन्धान् भावयन्ति रसान्यतः । तस्माद्भावा अमी प्रोक्ताः स्थायिसञ्चारिसात्त्विकाः ॥" रतिः— (यूनोः) प्रेमाख्यश्चित्तवृत्तिविशेषः, शृङ्गारस्य । हासः— विकृतदर्शनोद्भवो विकाशः–हास्यस्य । शोकः— अश्रुनिःश्वासादिजनकः प्रियनिधनादिजन्यश्चेतःक्वथनकारी अवस्थाविशेषः, करुणस्य । क्रोधः-परापराधजन्या आन्तरोत्तेजना, रौद्रस्य । उत्साहः— विक्रमौदार्य्यादये स्फूर्तिमयी मनोवृत्तिः, वीरस्य । घातकवस्तुदर्शनोद्भवः कातर्य्यमयो भावो भयम्, भयानकस्य । घृणितवस्तुजन्मा चेतोविकारयिता मनोभावो जुगुप्सा, बीभत्सस्य । असामान्यवस्तुविलोकनजन्यश्चित्तविस्फाररूपो विस्मयः, अद्भुतस्य । स्थायिभावाः उक्ताः ।

व्यभिचारिभावान् गणयति—

"निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः ।
आलस्यञ्चैव दैन्यञ्च चिन्ता मोहः स्मृति र्धृतिः ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥

सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मति र्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ ”

( मम्मटः )

व्यभिचारिणः- विशेषात्-आभिमुख्येन रसोपकारिणः, अमी नामतः उक्ताः भावाः त्रयस्त्रिंशत् बोधनीयाः । तथाहि—निर्वेदः- तत्त्वज्ञानादिजन्यं वैवर्ण्यादिजनकंस्वावमाननम् । शङ्का- परक्रूरतादिजन्या कम्पशोषादिजननी अनिष्टोत्प्रेक्षा । असूया दुर्जनताजन्या भृकुट्यादीङ्गितजननी परोत्कर्षाऽसहिष्णुता । मदः- पानादिजन्योऽङ्गस्खलनादिकृत् आनन्दसम्मोहः । श्रमः— अध्वगमनादिजन्यः स्वेदादिकृत् खेदः । आलस्यम्- जागरणादिजन्या जृम्भादिकृत् उद्योगशून्यता । दैन्यम्— दारिद्र्यादिजन्यं कार्ष्ण्यादिकृत् अनौजस्यम् । चिन्ता-इष्टाऽलाभजन्यं श्वासादिकृत् ध्यानम् । मोहः— चिन्ताजन्यं शिरोघूर्णनादिकृत् मूढत्वम् । स्मृतिः- सदृशवस्तुदर्शनजन्यमौत्सुक्यादिकृत् स्मरणम् । धृतिः- विवेकजन्यः चिन्तापरिहारकृत् सन्तोषः । व्रीडा- रहस्यस्फोटादिजन्योऽधोमुखत्वादिकृत् चित्तसङ्कोचः । चपलता- द्वेषरागादिजन्यः स्वच्छन्दाचरणादिकृत् चेतसोऽनवस्थानम् । हर्षः- इष्टलाभजन्यो गद्गदादिकृत् आनन्दः । आवेगः- आकस्मिकवस्तुदर्शनश्रवणादिजन्यो धावनादिकृत् संरम्भः । जडता- अनिष्टदर्शनादिजन्मा तूष्णींभावादिकृत् चेष्टाशून्यता । गर्वः- ऐश्वर्यादिजन्योऽङ्गवीक्षणादिकृत् परावज्ञापूर्वको मदः । विषादः- प्रारब्धवस्तुवैफल्यजन्मा निःश्वासादिकृत् पीडा । औत्सुक्यम्-रम्येच्छाजन्यं मार्गादिवीक्षणकृत् कालाक्षमत्वम् । निद्रा-श्रमादिजन्यं—नेत्रमीलनादिकृत् मनःसंमीलनम् । अपस्मारः- दुःखादिजन्यः भूपतनादिकृत् मनःक्षेपः । सुप्तं ( निद्रायाः पृथगुक्तेः ) स्वप्नः, भावनापूर्वकनिद्राजन्यः

श्वासोच्छ्वासादिकृत् प्रत्यक्षवददनुभवः। प्रबोधः— निद्रापरिणामजन्यं जृम्भादिकृत् विनिद्रत्वम्। अमर्षः— अपमानजन्या तर्जनादिकृत् प्रतिचिकीर्षा। अवहित्थम्— लज्जादिजन्यं क्रियान्तरग्रहणादिकृत् आकारगोपनम्। उग्रता— अपराधजन्या ताडनादिकृत् चण्डता। मतिः शास्त्रादि चिन्तनजन्यं भ्रमनिरसनादिकृत् अर्थनिर्धारणम्। व्याधिः— दोषजन्योऽङ्गमर्दादिकृत् मनस्तापः। उन्मादः— शोकक्रोधाद्यतिशयजन्मा रुदितगीतप्रलपनादिकृत् मनोविप्लवः। मरणं—शरीरप्राणवियोगः। त्रासः— परगर्जनादिजन्मा कम्पनादिकृत् मनःक्षोभः। वितर्कः— संदेहजन्योऽङ्गुलिनर्तनादिव्यापारजनको विचारः।

प्राचां स्वीकृतानष्टौ रसान्विविच्य नवीनैः स्वीकृतौ चमत्कारिणौ शान्तवत्सलरसौ निर्णयते—

शान्तरसः—

"निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः।"

" अहौ वा हारे वा कुसुमशयने वा दृषदि वा<br>मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा।<br>तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः<br>क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः॥"

( वैराग्यशतकम् )

निर्वेदः— आत्मज्ञानेन स्वावमानना, वैराग्यमिति यावत् शममिति तात्पर्यं, स्थायी—स्थिरः, भावः—आस्वादयोग्यतावान् मनोऽवस्थाविशेषो यत्र सः, शान्तोऽपि नवमः उक्तेभ्योऽतिरिक्तो रसोऽस्ति। विषयविषयिण्याश्चिरन्तनायाः प्रवृत्तेरुच्छेदस्वरूपस्य शमस्य आस्वादानर्हतया स्थायिभावाभावेन नास्ति शान्तो रस इति केचित्। तन्न। शान्ते 'तृष्णाक्षयसुखस्यैते नार्हन्ति षोडशीं कलाम्' इत्यभियुक्तदिशा सहृदयानां परमानन्दानुभवात्। तदुक्तं हि 'रसनाद्रसत्वमेषां मधुरादीनामिवोक्तमाचार्यैः।

निर्वेदादिष्वपि— तत्प्रकाममस्तीति तेऽपि रसाः ॥'

शान्तः । तत्त्वज्ञानाद्यवलम्बितो जगदनित्यतादिपर्यालोचनोद्दीपितो हरिभजनात्मचिन्तनाद्यनुभावितः प्रबोधाद्युद्दीपितो निर्वेदस्थायिभावो रसज्ञै रस्यमानः शान्तरसो भवति ।

उदाहरणम्— अहाविति । कस्यचित् सांसारिकभोगवितृष्णस्य योगिन उक्तिरियम् । अहौ—सर्पे, हारे— मौक्तिकमालायां वा, कुसुम-शयने– पुष्पशय्यायाम्, दृषदि– प्रस्तरे, वा मणौ– हीरकप्रभृतौ, लोष्टे— मृत्तिकापिण्डे वा, बलवति अपकारक्षमे इत्यर्थः । सुहृदि—मित्रे वा, तृणे, स्त्रैणे—रमण्यां वा, समा अहिहारयोरिव सुखदुःखनिमित्तयो र्निर्विशेषा दृक्— अन्तर्दृष्टिर्यस्य तादृशस्य ( तदुक्तं "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते" ) क्वचित्— शान्ते इत्यर्थं । पुण्ये— पवित्रे, अरण्ये—कानने, 'शिव शिवेति प्रलपतः, उन्मत्तवत् प्रतिक्षणं गायतो मम दिवसा यान्तु मम जीवनं व्येतु । अत्र 'मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदा' इति गीताप्रति-पादितज्ञानालम्बितः, समदर्शनाद्यनुभावितः, शिवजपादिजातहर्षादिभिः सञ्चारितो निर्वेदः सरसैरास्वाद्यमानो रसः शान्तः । नवीनैश्चमत्कारितया स्वीकृतं वात्सल्यरसं प्रतिपादयति—

वत्सलरसः—

" केचिच्चमत्कारितया वत्सलञ्च रसं विदुः । "

( विश्वनाथः )

यदाह धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः ॥

( रघुवंशम् )

केचित्-मुनीन्द्रादयोऽर्वाचीनाः, चमत्कारितया-सचमत्कारं सरसैरास्वाद्यमानतया वत्सलं रसं विदुः-जानन्ति । सहृदयै र्विभावादिपुष्टः कश्चित्स्थिरो भाव एवास्वाद्यमानो रस इति सिद्धान्तेन—पुत्राद्यालम्बितस्तच्चेष्टाद्यनुभावितः हर्षादिव्यभिचारितः स्नेहाख्यः स्थायिभावश्चर्वणाविषयमुपगतः सचेतसां वत्सलरसः सम्पन्नः । नचोक्तरसेष्वन्तर्भावः । हास्यवीरादीनां स्थायिभावा अन्याः । शृङ्गारस्य च तरुणतरुणी समालम्बनविभाववत्तया अस्मान्महान्भेदः । उदाहरति यदेति । दिलीपसूनो रघोः शैशवे चेष्टितं वर्णयति-स, अर्भकः-बालः, ( रघुः ) धात्र्या-दुग्धपायिन्या ( समं ) प्रथमोदितं पूर्वोदीरितं वचो यदाह यदुदीरयामास । यच्च तदीयां-धात्रीसम्बन्धिनीम्, अङ्गुलिम्, अवलम्ब्य-धृत्वा ययौ चचार, प्रणिपातशिक्षया-'एनमेवं प्रणम' इत्याद्युपदेशेन यत्, नम्रः-नतः प्रणमितुमित्यर्थः । तेन पूर्वोक्तेन, पितुः-दिलीपस्य, मुदं—प्रमोदं ततान-दूरं विस्तारयामास । स्वभावोक्तिः । वंशस्थं वृत्तम् । अर्भकावलम्बितः वचोऽभिधानादिचेष्टया अनुभावितः, पितृगतहर्षादिसञ्चारित आस्वाद्यमानः स्नेहो वत्सलरसः ।

असंलक्ष्यक्रमं सप्रपञ्चमुदीर्य संलक्ष्यक्रममाह—

"यत्र व्यङ्ग्यप्रतीतेस्तु क्रमः सम्यग्विभाव्यते ।

स संलक्ष्यक्रमव्यङ्ग्यस्तद्भेदा बहवः स्मृताः ॥"

यथा पूर्वोदाहृते 'कुबेरगुप्ताम्' इत्यादि श्लोके दक्षिणा शब्देन दाक्षिण्यशीलनायिकारूपं वस्तु व्यज्यते । अयञ्च शब्दशक्त्युद्भवो वस्तुध्वनिः ।

यत्र व्यङ्ग्यस्य-ध्वनितस्यार्थस्य, प्रतीतेः—बोधस्य, क्रमः—पौर्वापर्यरूपा शृङ्खला, सम्यक् स्पष्टं, विभाव्यते-प्रकटीभवति, स संलक्ष्यः-विभाव्यमानः, क्रमो वाच्यार्थप्रतीतिपूर्वकप्रतीयमानार्थबोधरूपो यत्र सः, तन्नामा ध्वनिः । तस्य प्रकृतिप्रत्ययवक्तृबोद्धव्यदेशकालादि-

भेदेन बहवो भेदाः । दृष्टान्तं दर्शयति—'कुबेरगुप्तां दिशमुष्णरश्मौ' इति व्याख्यातपूर्वे पद्ये दक्षिणापदेन पूर्वं 'दक्षिणा दिक्' इति तिग्मरश्मि-प्रभृतिनियमितो मुख्यार्थः प्रतीयते अनन्तरं व्यञ्जनया दाक्षिण्यवती नायिका, इति क्रमः स्फुटः । अत्र 'दक्षिणा' इति शब्देनैवनायिकारूपं नावस्तु ध्वनितम् । अतः शब्दशक्त्युद्भवो वस्तुध्वनिः ।

उत्तमं ध्वनिकाव्यं प्रतिपाद्य गुणीभूतव्यङ्ग्यं मध्यमं काव्यमभिधत्ते—

"अनुत्तमे गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु वाच्यतः ।"

व्यङ्ग्ये—व्यङ्ग्यार्थे, वाच्यतः—वाच्यार्थात्, अनुत्तमे—अनधिक-चमत्कारिणि सति गुणीभूतव्यङ्ग्यम् । तच्च मध्यमं काव्यं कथ्यते । यथा—

"अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः
केनाऽप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥"

(बालरामायणम्)

अत्र अनुनायकोपनायकप्रतिनायकेषु निर्दिष्टेषु चतुर्थपादे राम एवार्थशक्त्या प्रतीयते, स च केनापीत्युपादानेन वाच्याय-मानतया अगूढः कृतः । इति व्यङ्ग्यस्य चमत्कारित्वमपनीतम् ।

अनुत्तमे—चमत्कारापकर्षेण वाच्यार्थान्नोत्कृष्टे । गुणीभूतः-अप्रधानीभूत व्यङ्ग्यः- व्यञ्जनाप्रतिपाद्योऽर्थो यत्र तत् । व्यङ्ग्यस्यानुत्तमता अष्टविधैः प्रोक्ता । यदुक्तं प्रकाशे—"अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् । सन्दिग्ध-तुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥ व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ॥" तेषु भेदेषु अगूढस्य—व्यङ्ग्यस्य वाच्यायमानतां गतस्य—उदाहरणं प्रदर्शयति—अत्रेति । लङ्कासमरभूमि घटनावर्णन-

पुरस्सरां दर्शयतो रामस्य सीतां प्रत्युक्तिः। हे मृगाक्षि—हरिणनयने, अत्र—अस्मिन् स्थाने फणिपाशेन—नागरज्जुना, बन्धनविधिः—मेघनाद-द्वारा मत्सैन्यानां निगडनविधिः। आसीत्। अत्र—अङ्गुलिनिर्दिष्टे स्थाने, शक्त्या-आयुधविशेषेण, (रावणयोजितयेत्यनुसन्धेयम्) वक्षसि—उरसि, गाढं—मर्मविदारणं यथास्यात्तथा, ताडिते—आहते, भवत्याः देवरे—लक्ष्मणे, हनुमता, द्रोणाद्रिः—सञ्जीवनौषधिवान् पर्वतविशेषः, आहृतः—उत्पाट्य आनीतः। अत्र दिव्यैः—दिविभवैः, अलौकिकैः इत्यर्थः, लक्ष्मण-शरैः, इन्द्रजित् (एतन्नामोपादानेन तस्याजेयत्वम्) लोकान्तरं-परलोकं, लम्भितः—प्रापितः। अत्र केनाऽपि (स्वयमात्मगुणकीर्तने लज्जाशीलतया नाम नोपपादितम्) राक्षसपतेः—रावणस्य, कण्ठाटवी, दशशिरस्तया ग्रीवावनं कृत्ता-छिन्ना। भुवनविदितस्य रामकृतरावणवधस्य 'केनापि' इति पदं विनापि प्रकरणागतस्य रामस्य प्रतीयमानतया केनापीत्युपादानं व्यङ्ग्यस्यागूढता-प्रतिपादनम्, अत इदं केन पदेन व्यङ्ग्यं वाच्यार्थान्नोत्कृष्टं सत् मध्यमं गुणीभूतव्यङ्ग्यं काव्यम्। शार्दूलविक्रीडितं वृत्तम्।

अनुनायकः—नायकानुसारी हनूमान्। उपनायकः—नायकात् किञ्चिन्न्यूनतया वर्णनीयो लक्ष्मणः। प्रतिनायकः—नायकप्रतिकूलो राक्षसपतिः रावणः। निर्दिष्टाः प्रसङ्गे वर्णिताः। काव्यस्य त्रिषु सम्मतेषु प्रकारेषु उत्तममध्यमयोः लक्षणोदाहरणेप्रतिपाद्य अधमं तृतीयं चित्रा-ख्यभेदं व्याचिख्यासुः कारिकामवतारयति—

"व्यङ्ग्यार्थहीनं काव्यं यत् तत्तु चित्रमिति स्मृतम्॥"

चित्रमिति—गुणालङ्कारयुक्तम्, व्यङ्ग्यार्थहीनं—स्फुट प्रतीय-मानव्यङ्ग्यार्थरहितम्। तच्च अधमं काव्यमुच्यते।

"शब्दचित्रं वाच्यचित्रं द्विविधं परिकीर्तितम्।"

यत्र वाच्यार्थात् शब्दस्य प्राधान्येन चमत्कारित्वं तत् शब्द-चित्रम्। यथा—

"कूजत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः।
एतस्मिन्प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु कुम्भीनसाः॥ (उ. च.)

यत्र शब्दात् वाच्यार्थस्य प्राधान्येन चमत्कारित्वं तद्वाच्याचित्रम्।
यथा—

"ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति॥

इति काव्यप्रभेदनं नाम तृतीयशिखा।

यत्काव्यं, व्यङ्ग्येन-व्यञ्जनया प्रतिपाद्येन अर्थेन हीनं, तत् व्यङ्ग्यभूतरसादिशून्यतया निष्प्राणतया अन्वर्थकं चित्रं नाम अधमं काव्यम्। रसादिव्यङ्ग्यशून्यत्वे सति गुणव्यञ्जक—शब्दार्थशाल्यलङ्कार-शालित्वं चित्रत्वम्। यद्यपि सर्वत्र वाक्ये अंशतयापि व्यङ्गमवतिष्ठते किन्तु उत्तममध्यमकाव्ययोरभिमतेन स्फुटं प्रतीयमानेन—बोध्यमानेन, व्यङ्ग्येन—व्यञ्जनाप्रतिपाद्येन, अर्थेन रहितम्। अस्फुटतरव्यङ्ग्यमित्यर्थः। पुनश्चित्रकाव्यं शब्दार्थभेदेन द्विधा भिनत्ति। शब्दचित्रं शब्दावलम्बनकं चित्रम् (मध्यमपदलोपिसमासः) वाच्यचित्रम्—वाचा—शब्देन, प्रति-पाद्यः-वाच्यः-अर्थः, तदवलम्बनकं चित्रम्।

शब्दचित्रत्वम्—व्यङ्ग्यशून्यत्वे अर्थादधिकचमत्कारवच्छब्दवत्त्वम्। उदाहरति—कूजदिति—। उत्तररामचरिते क्रौञ्चावद्गिरिवर्णनप्रसङ्गे—कूजतां—शब्दं कुर्वतां, कुञ्जकुटीरेषु—लतापिहितलघुगृहेषु, कौशिका-नाम्—उलूकानाम्, याः घटाः—समूहाः, तेषां घूत्कारः—घू घू ध्वनिः,

तद्वन्तः कीचकाः—वायुपूरितरन्ध्रा वेणवः, ( वेणवः कीचकास्तेस्युर्ये स्वनन्त्यनिलोद्धताः ) तेषां स्तम्बाडम्बराः-गुच्छसङ्घाः, तत्र मूकानि—भयात् शब्दशून्यानि मौकुलिकुलानि—काकसङ्घाः, यत्र सः, क्रौञ्चावतः तदाख्यः ( क्रौञ्चावत् शब्दात् स्वार्थेऽण् प्राज्ञवत् ) गिरिः शोभते इति शेषः । एतस्मिन्— पर्वते, प्रचलतां—समन्तात् भ्रमतां, प्रचलाकिनां—मयूराणां, कूजितैः-शब्दैः, उद्वेजिताः—भयाक्रान्ताः, कुम्भीनसाः—सर्पाः, पुराणचन्दनतरुस्कन्धेषु-प्राचीनचन्दनवृक्षशाखामूलेषु, उद्वेल्लन्ति-भयात् तत्रैव लीना भवन्ति । शार्दूलविक्रीडितं छन्दः । अत्र भयानुकूलः ओजो गुणः, अनुप्रासश्चालङ्कारः । अत्र वाच्यार्थाच्छब्दालङ्कारस्यैव चमत्काराधिक्यमिति शब्दचित्रम् । यद्यपीह भयं व्यङ्ग्यमिव किन्तु कवेः शब्दयोजनायामाग्रहिलतया, शब्दालङ्कार एव प्रधानतया स्फुटः, व्यङ्ग्यं तिरोहितं न तु स्फुटतरमिति सूपपन्नम् ।

अर्थे चमत्कारवतश्चित्रस्य लक्ष्यमवतारयति—ते-इति । पक्ष्मलदृशां-सुन्दरीणाम् , ते-प्रसिद्धाः, दृष्टिमात्रपतिताः-केवलमवलोकिताः, अपि-न तु स्पृष्टाः परिचिता वेत्यर्थः । अलकाः— चूर्णकुन्तलाः, खलाश्च-दुष्टाश्च, कस्य न प्राणिनः क्षोभाय-चेतोविकाराय ? सर्वस्यापीत्यर्थः द्वावपि हृदयमथने तुल्यधर्माणौ । अन्यदपि साम्यं दर्शयति – नीचाः—अधमाः, नम्राश्च, सविलासं-सव्रीडं, सशोभञ्च, अलीके-मिथ्याविचारे-भाले च, लग्नाः—सक्ताः, ये—अलकाः खलाः उभये इत्यर्थः । कालतां-श्यामताम् ( कालपक्षे ) मृत्युवद् भयङ्करतां ( खलपक्षे ) कुटिलताम्—भङ्गिमानं, पिशुनताञ्च न त्यजन्ति अपि तु स्वस्मिन्स्थापयन्ति । श्लेषानुप्राणिता तुल्ययोगिता । उपमाऽपि नृत्यति । अत्र अस्फुटव्यङ्ग्ये अर्थालङ्कारे एव कवे र्निपुणा दृष्टिः । ततो वाच्यचित्रम् ।

इति उत्तमे ध्वनिभेदे, मध्यमे गुणीभूतव्यङ्ग्यभेदे, अधमे चित्रभेदे काव्यं त्रिधा विभिद्य शिखामिमां समपूरयत् ।

इति स्नेहवर्षिण्यां तृतीयः कल्पः ।

# चतुर्थशिखा ।

उत्कृष्टापकृष्टदृष्टया ध्वनि-गुणीभूतव्यङ्ग्य-चित्रेषु काव्यं विभज्य रचना-दृष्टया तद्विभेदयिषुः शिखामिमां सङ्कलयति—

एवं ध्वनिगुणीभूतव्यङ्ग्यचित्रत्वेन काव्यस्य भेदत्रयमुक्त्वा पुनर्दृश्यश्रव्यत्वभेदेन भेदद्वयमाह—

" दृश्यश्रव्यत्व भेदेन पुनः काव्यं द्विधा मतम् ।
दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम् ॥ "

( विश्वनाथः )

अभिनेयमभिनययोग्यं तच्च दृश्यं काव्यं नटैः रामादिस्वरूपारोपाद्रूपकमिति कथ्यते ।

एवमिति । ध्वनित्वं-रसादिमत्त्वे सति वाच्यार्थोत्कृष्टव्यङ्ग्यार्थताशालित्वम् । गुणीभूतव्यङ्ग्यत्वम्—रसादिमत्त्वे सति प्रधानीभूतवाच्यार्थाङ्गतापन्नव्यङ्ग्यार्थत्वम् । चित्रत्वम्—ध्वनिगुणीभूतव्यङ्ग्यत्वाभाववत्त्वेऽप्यलङ्कारादिवत्त्वम् । दृश्येति—दृश्यत्वम्—श्रोतृग्राह्यत्वेऽपि विशेषतो दृष्टिविषयीभूततया लोकोत्तरानन्दजनकत्वम् । श्रव्यत्वम्—श्रवणमात्रविषयीभूतत्वम् । पुनरिति-पूर्वोक्तान् भेदानतिरिच्य भेदान्तरमपि सम्भवतीत्यर्थः ।

नटाभिनीतचतुर्विधानुकरणदर्शनेन परोक्षवृत्तमपि साक्षादिवानुभूयमानं, दर्शनश्रवणोभयद्वारा हृदि आस्वाद्यमानो लोकोत्तरानन्दो दृश्यकाव्यस्यैवेतिकाव्यभेदयोः प्रधानतरत्वं प्रतिपादयति । यदुक्तं 'काव्येषु नाटकं रम्यम्' । अतस्तल्लक्षणं प्रथममुल्लिखति—दृश्यमिति । तत्र-उभयोर्भेदयोः, दृश्यम्, सहृदयैः सामाजिकैर्दर्शनद्वाराऽवगम्यम् । अभिनेयम्—अभिनयद्वारा—आङ्गिकादिवक्ष्यमाणचतुर्विधानुकरणद्वारा सम्पा-

दनीयं भवति। दृश्यकाव्यस्य रूपकमिति नामान्तरस्य सारवत्तां सूचयति— तेषाम्—अनुकार्य्याणां रामसीतादीनां, रूपस्य-चेष्टादेः, आरोपात्—नटे—अनुकर्तरि अवस्थापनात् रूपयति—एकतां नयतीति रूपकं संज्ञा। अभिनययोग्यम्—रङ्गस्थले नटानुकरणयोग्यतामापन्नम्।

अभिनयस्वरूपं निरूपयति—

"भवेदाभिनयोऽवस्थाऽनुकारः स चतुर्विधः।
आङ्गिको वाचिकश्चैवमाहार्य्यः सात्विकस्तथा॥"

नटैरङ्गेन, वाचा, वस्त्रालङ्कारादिभिः, मानसभावैश्च राम-युधिष्ठिरादीनामवस्थानुकरणमभिनयः।

अवस्थायाः—नाटकाद्युल्लिखितनायकादीनां तत्तत्कालिकचेष्टादेः, अनुकारः—अनुकरणं तद्रूपप्रदर्शनम्, अभि—आभिमुख्येन नयः-नयनं रङ्गस्थले कथापात्राणाम् अनुकरणकौशलेनोपस्थापनम् अभिनयः। स चतुर्विधः। आङ्गिकः, अङ्गैर्नयनहस्तादिभिर्निष्पन्नः। वाचिकः-वाचा—संवादादिना, निष्पन्नः। आहार्य्यः—तत्तद्योग्यवेशभाषादिग्रहणेन ( तदवस्थानुभावकतया ) सम्पादनीयः। सात्त्विकः 'रजस्तमोभ्यामस्पृष्टं मनः सत्त्वम्' तेन सम्पन्नः। मानसभावैः—मनोभावप्रदर्शकैः स्वेदरोमाञ्चादिभिः कृत इति भावः। एवं चतुर्विधोऽनुकारः, अभिनयो भवति। एतद्योग्यमेव काव्यं दृश्यमुच्यते। यतो नटाः पूर्वोक्तचेष्टादिभिः रामादय इवाचरन्तः स्वेषु तानारोपयन्ति ततो रूपकनाम्ना दृश्यकाव्यस्य व्यवहारो जातः। यद्यपि सम्प्रति अर्वाञ्चो दृश्यकाव्यं नाटकनाम्नैव व्याहरन्ति किन्तु रूपकं नामैव प्राचां सम्प्रदाये।

रूपकनाम्ना लघुरूपभूतोपरूपकनाम्ना च व्यवहृतानां भेदानां नामानि यथासम्भवं लक्षणमपि निरूप्यन्ते—

दृश्यकाव्यानि कानिचित् रूपकनाम्ना, अपराणि उपरूपकनाम्ना कथ्यन्ते। तत्र नाटकप्रकरणप्रहसनप्रभृतीनि दशविधानि।

उपरूपकाणि च नाटिकात्रोटकादीनि अष्टादश-भेदानि । विशेषं विना सर्वेषामेव स्वरूपं नाटकलक्षणसमानम् ।

"नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम् ।
विलासद्ध्र्यादि गुणवद्युक्तं नानाविभूतिभिः ॥
सुखदुःखसमुद्भूतिनानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥
प्रख्यातवंशो राजर्षि र्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥
चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।
एक एव भवेदङ्गी प्रथमो वीर एव वा ॥
अङ्गमन्ये रसाः सर्वे कार्यं निर्वहणेऽद्भुतम् ।"

दृश्यकाव्यानि—अभिनययोग्यकविनिबद्धवाक्यपटलानि, मुख्यानि दशविधानि । तदुक्तं—'नाटकमथ प्रकरणं भाणव्यायोग-समवकार-डिमाः । ईहा मृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥" गौणानि उपरूपकाणि अष्टादशभेदानि । यदुक्तं—"नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् । प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥ संलापकं श्रीगदितं शिल्पकञ्च विलासिका । दुर्मल्लिका प्रकरणी हल्लीशोभाणिकेति च । अष्टादश प्राहुरुपरूपकाणि मनीषिभिः ॥" विशेषं विना—विशिष्य (आचार्यैः) विवेचितं विशिष्टं लक्षणं विना । यथा प्रकरणे—"वृत्तं कविनैव उद्भावितं, नायकः प्रशान्तः, ब्राह्मणामात्यवणिजामन्यतमः । कुलजा वेश्याऽपि वा नायिका ।" एतावानेव विशेषः, अन्यत्—अङ्क—प्रस्तावना-सन्धि-प्रभृति सर्वं नाटकतुल्यमेव । एवं प्रहसनादावपि सर्वत्र बोध्यम् ।

सर्वेषु रूपकभेदेषु शिरोभूतं बहुलप्रचारं नाटकमेव ( यदुक्तं—'प्रकृ-

तित्वादथान्येषां भूयो रसपरिग्रहात्। सम्पूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते ॥) लिलक्षयिषुरुपरितनां कारिकावलीमवतारयामास—नाटकमिति। नाटयति—सात्त्विकभावोदयेन अनुकर्तारं नटं किञ्चित् स्पन्दयति इति नाटकम्। ख्यातं-पुराणेतिहासप्रसिद्धं, वृत्तं—वस्तुघटना यत्र तत्। पञ्चभिः-मुख-प्रतिमुख-गर्भ-विमर्षोपसंहारैः, सन्धिभिः-एकप्रयोजनान्वितकथांशसम्बन्धैः, समन्वितं-युक्तम्। विलासर्द्ध्यादयः—धीरदृष्टिप्रमुखसम्पत्प्रभृतयो, गुणाः—नायकगुणाः सन्त्यस्मिन्निति। नानाविभूतिभिः—नैकविधालौकिकसम्पदादिभिः, युक्तम्। सुखदुःखयोः—घटनाक्रमेण आपतन्त्योः सम्पद्विपदोः, समुद्भूतिः—प्रदर्शनमिति यावत्, यत्र तत्। वस्तुतः काव्यसमर्पितं लौकिकं दुःखमपि सुखैकरूपतामधिगच्छति; वनवासादि लोके दुःखमनुभावयति किन्तु काव्ये तदेव चेतो द्रवयति। नानारसैः—यथासम्भवं सकलैः रसैः, निरन्तरम्—आन्तर्यरहितम् अविच्छिन्नम्। तत्र पञ्च आरभ्य दश यावत् यथासम्भवम् अङ्काः—नाटकविभागाः, उक्ताः। नाट्यशास्त्रकर्तृभिरिति शेषः। प्रख्यातवंशः—सुप्रसिद्धकुलोत्पन्नः, राजर्षिः—राजा ऋषिरिव (उपमितसमासः) ऋषिवद्धर्माचारपरः। प्रतापः—कोषदण्डजं तेजः, अस्यास्तीति। धीरोदात्तः—"अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः। स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥" इत्युक्तलक्षणशाली नेता—नायकः नाट्यप्रधानपुरुषः, तदुक्तं—'त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही। दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता ॥" दिव्यः—दिविभवः, कृष्णचन्द्रप्रभृतिः। दिव्यादिव्यः—दिव्योऽपि सन् आत्मानमदिव्यं मन्यमानः, रामचन्द्रादिः। गुणवान्-प्रशस्तगुणयुक्तः, मतः—उपनिबन्धने नायकतया इष्टः। अत्र ये मुख्याः—प्रधानीभूताः, दौवारिककञ्चुकिवन्दिव्यतिरिक्ताः, पीठमर्दप्रभृतयः, कार्ये—उद्देश्यप्राप्तौ, नायिकाविजयादिरूपे इति यावत्। व्यापृताः—संलग्नाः, पुरुषाः चत्वारः पञ्च वा भवन्ति। (बाहुल्ये कस्यापि चरित्रचित्रस्य अस्फुटत्वात्) एकः एव प्रथमः—शृङ्गारः—रतिस्थायिभावकः, वीरः— उत्साहस्था-

यिभावकः, रसः—विभावादिसंवलितस्वाद्यमानीकृत स्थायिभावरूपः। अङ्गी—प्रधानीभूतो भवेत् । अन्ये—हास्यादयो रसास्तु अङ्गानि—अङ्गिरसपरिपोषकाणि भवेयुः । निर्वहणे—उपसंहारे, अद्भुतं भवेत्; तत्र काऽपि चमत्कारिणी घटना निबन्धनीया यया नाट्यप्रभावो दर्शकानां हृदि कालाय क्रियते स्थानमवाप्नुयात् ।

एतदेव वृत्तौ स्फोटयति—

ख्यातं—रामायणमहाभारतादिप्रसिद्धं रामयुधिष्ठिरादिचरितं, सन्धयः—वक्ष्यमाणाः, विलासादयः—नायकगुणाः, तै र्युक्तम् । सुखदुःखसमुद्भवत्वं रामयुधिष्ठिरादिवृत्तान्तेषु अभिव्यक्तम्, नानाविधैः रसैः निरन्तरम्—अविच्छिन्नम्, राजर्षयः—दुष्यन्तादयः, दिव्यः—श्रीकृष्णादिः, दिव्यादिव्यः,—यो दिव्योऽप्यात्मनि नराभिमानी; यथा श्रीरामचन्द्रः निर्वहणे—पञ्चमे सन्धौ ।

सन्धय इति । वक्ष्यमाणाः—अग्रे कथयिष्यमाणाः यथा—"अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।" मुखं प्रति मुखं गर्भो विमर्ष उपसंहृतिः ।" विलासादयः—"शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यं तेजसी । ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥"

नाटकस्य विभागोऽङ्केषु विधीयते । दर्शकाऽभिनेतॄणां विश्रान्तये, दृश्ययोजनायै, निरन्तरैकविधदृश्यदर्शन—जायमान—वैरुच्यापनोदाय च विधीयते । कोऽसौ पुनरङ्कः ? उत्तरयति—

"प्रत्यक्ष नेतृचरितो रसभावसमुज्ज्वलः ।
नाना-विधान-संयुक्तो बीज संहृतिमान्न च ॥
युक्तो न बहुभिः कार्य्यै र्नातिप्रचुरपद्यवान् ।
आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥

नानेकदिननिर्वर्त्यकथया सम्प्रयोजितः ।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥
वधयुद्धविवाहाद्यै र्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनां प्रत्यक्षचरितै र्युतः ॥
अन्तर्निष्क्रान्त–निखिल–पात्रोऽङ्क इति कीर्तितः ।"

भावाः—देवादिकविषयकरत्यादयः,बीजस्य संहृतिः—सङ्कोचः ।

प्रत्यक्षम्—अतिरोहितं न तु विष्कम्भादिभिः सूचनीयम्, नेतुः—नायकस्य, चरितं—वृत्तं, यत्र सः । अङ्के नायकनायिकयोरन्यतरस्य प्रधानपात्रस्य चरितमवश्यं साक्षात् निबन्धनीयम् इति भावः । रसैः—शृङ्गारादिभिः, भावैः—देवद्विजनृपगतानुरागादिभिः, ( तदुक्तं—"सञ्चारिणः प्रधानानि देवादिविषया रतिः । उद्‌बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥" ) समुज्ज्वलः—प्रकाशितः, परिष्कृत इत्यर्थः । नानाविधानैः—विविधचेष्टाभिः दृश्यकल्पनाभिश्च, सहितः । बीजस्य—स्वल्पारम्भोत्तरोत्तरवृद्धस्य प्रधानकारणस्य ( 'स्वल्पोद्दिष्टं तु यत्कार्यं बीजं विस्तार्यनेकधा' इत्युक्तलक्षणस्य ) उपसंहृतिः—अवसानम् ( अनवसरमितिभावः ) अस्यास्तीति स न भवतीति—सद्बीज इत्यर्थः । बहुभिः—अनल्पैः, कार्यैः—व्यापारै र्युक्तो न । अतिप्रचुरं—बहुलं, पद्यं—छन्दोबद्धवाक्यम्, अस्यास्तीति तन्न; यथोचितगद्यपद्योभयसन्निवेशवान् । इदं तात्पर्य्यं,—नाटके अनुकार्याणां वाचिकमप्यनुकरणं भवति । अनुकरणे स्वाभाविकता रक्षणीया । एवं प्रचुरपद्यमयं भाषणं नहि लौकिकी रीतिः । बाहुल्येन दूरान्वितपद्यार्थबोधे नहि सुखेन धावति मतिः, अतः सरलता स्वाभाविकतादिगुणशालि गद्यं गगनमिव नहि गम्भीरघोषवद्भिः पद्यैः पयोदैः, निरन्तरमावरणीयम् । स च अङ्कः, अवश्य कर्तव्यकार्याणां विरोधपरिहारपूर्वकं रचितः, अनेकदिनैः—बहुदिवसैः—निवर्त्यया—समाप्यया, कथया न सम्प्रयोजितः—न निबद्धः । ( दिनैकेन समाप्तं यद्वृत्तं तेनैव

अङ्को निबन्धनीयः । 'शकुन्तलायाः तपोवनात्प्रस्थानं दुष्यन्तसभायां प्रवेशमन्तरा कियद्भिर्दिवसै र्गतम्, एवम् 'अहल्योद्धारः सीतास्वयंवरश्च नैकस्मिन् दिनेवृत्तम् । तत्तु एकेनैवाङ्केन न वक्तव्यम् । एकेन वासरेण यद्वृत्तं तदेवैकस्मिन्नङ्के वाच्यमिति रहस्यम् ) आसन्ननायकः—सन्निहित-प्रधानपात्रः, त्रिचतुरै र्नाधिकैरिति भावः । पात्रैः सहितः । वध-युद्ध-विवाहाद्यै र्वर्जितः ( दृश्यत्वेन न तु वाचा सूचितत्वेनेति बोध्यम् । ) नातिविस्तृतः । नायिका-परिवारादीनाञ्च प्रत्यक्षचरितैः न तु वाचा सूचितैरिति भावः । युतः—सङ्गतः । अन्ते—अवसाने, निष्क्रान्तानि—रङ्गमञ्चाद्गतानि, निखिलपात्राणि यत्र सः अङ्कः—तदाख्यो नाटकपरिच्छेदः, उक्तः आचार्य्यैरिति शेषः ।

नाटकनिरूपणे अवसरप्राप्तमभिनयक्रमं रङ्गस्थलोपयोगिनमपि उपनिबध्नन् पूर्वंकृत्यमुपदिशति—

तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम् ।
कथनं कविसंज्ञादे र्नाटकस्याप्यथामुखम् ॥

तत्र नाटके सभापूजा विनीतवचनादिना सभ्यानामाभिमुख्य-सम्पादनम् आमुखं प्रस्तावना । पूर्वरङ्गलक्षणम्—

यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥

नान्दीस्वरूपं भरतः—

देवद्विजनृपादीनामाशीर्वादपरायणा ।
नन्दन्ति देवता यस्मात्तस्मान्नान्दीति संज्ञिता ॥

सूत्रधारो नान्दीं प्रयोज्य काव्यार्थसूचकै र्मधुरवचनैः रङ्गस्थान् सभ्यान् प्रसाद्य रूपकस्य कर्तुश्च आख्यां गोत्राद्यपि कीर्तयेत् ।

तत्र—नाटके, प्रथमं पूर्वरङ्गः—नटकृतमङ्गलकृत्यम्, अनन्तरं सभायाः—सभ्यमण्डल्याः, इति यावत्, पूजा—प्रसन्नताप्रतिपादकैः शब्दैरभ्यर्थना, कवेः—रचयितुः, संज्ञादेः—नामगोत्र-निवासादेः, नाटकस्य—रूपकस्य च, नाम्नः कथनम्—कीर्तनम् । अथ—अनन्तरम्, आमुखं—प्रस्तावना भवति । आभिमुख्यम्—आनुकूल्यम्—उन्मुखीकरणमिति भावः ।

पूर्वरङ्गं परिचपयति—नाट्यवस्तुनः—अभिनयकार्यात्, पूर्वं, रङ्गस्य-नाट्यस्य, विघ्नानां—प्रतिबन्धकीभूतकारणानाम्, शान्तये—निवारणाय, कुशीलवाः—नटाः, यत् मङ्गलं कुर्वन्ति सः पूर्वरङ्ग उच्यते । अस्यैव नान्दी अङ्गम् । तामेव लक्षयति—देवेति । सुरविप्रभूपतीनाम्, आशीर्वादे—शुभाशंसने; परं सातिशयम्, अयनम्—आश्रयः—गतिः—प्रवृत्तिर्वा यस्याः सा तत्परेत्यर्थः । यस्मात्—हेतोः—देवता नन्दन्ति—हृष्यन्ति, तस्मात् नान्दी-स्तुतिपाठरूपा पद्धतिः, संज्ञिता—संज्ञा अस्याः संजाता । यद्यपि बहुषु 'नान्द्यन्ते प्रविशति सूत्रधारः' इत्युपलम्भात् सूत्रधारादतिरिक्तो नान्दीं प्रयुनक्तीति प्रतीयते किन्तु सम्प्रति स एव सर्वं नाट्यपूर्वकृत्यं सम्पादयन्नवलोक्यते । अत उदीरितम् "सूत्रधारो नान्दीं प्रयोज्य" इति । सूत्रं—एकत्र ग्रथितत्वान् नाट्यप्रबन्धं धरतीति सूत्रधारः ( कर्मण्यण् ) । रज्यन्ते—अभिनयेन प्रसाद्यन्ते अस्मिन्निति रङ्गस्तत्स्थान् दर्शकानित्यर्थः ।

अथ किमामुखमिति जिज्ञासिते, तल्लक्षणमुल्लिखति—

"नटी विदूषको वाऽपि पारिपार्श्वक एव वा ।  
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥  
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभि मिथः ।  
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥"

नटीति स्त्रीत्वमविवक्षितं, प्रस्तुतस्य आक्षेपिभिः– उद्बोधकैः । तद्भेदा कथितास्तेनैव—

" उद्घात्यकं कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवर्तकाऽवलगिते आमुखाङ्गानि पञ्च वै ॥ "

नटी—शैलूषी, विदूषयति–सदपि वस्तु हास्याय अन्यथाकरोतीति विदूषकः । अपि वा पारिपार्श्वकः–सूत्रधारस्य पार्श्वचरः सहायको नटः, सूत्रधारेण–प्रधाननटेन, सहिताः, चित्रैः–नानाविधैः, चमत्कारिभिरिति भावः । स्वकार्य्योत्थैः–अभिनयरूपनिजकार्योद्भूतैः, तदुपयोगिभिरितियावत् यत्र मिथः–परस्परम्, सम्भाषन्ते, तत् आमुखं ( प्रारम्भकत्वादिति भावः ) बोध्यम्, नाम्ना–नामान्तरेण, प्रस्तावना–प्रस्तूयन्ते विषया यत्र सा, अपि, सा एव, ( विशेष्यानुरोधेन स्त्रीत्वम् ) । अविवक्षितमिति–' नटी '- इत्यत्र स्त्रीत्वं वक्तुं नेष्टम् । नटीपदेन नटो नटी सामान्यत एव गृह्यते । तेनैव–पूर्वोदीरितकारिकाप्रणेत्रा नाट्यशास्त्रप्रवर्तकेन भरतमुनिना । विभिद्यते किञ्चिद्विशिष्टतयाऽन्यतः पृथक् क्रियते अनेनेति भेदः । वै- गणनानुसारेण पञ्च एव, आमुखस्य-प्रस्तावनायाः, अङ्गानि–भेदा इत्यर्थः । तान्येव दर्शयति—( १ ) उत्–उत्क्षिप्य–अन्यार्थकं वाक्यमन्यार्थे नियुज्य इति भावः, हन्यते अर्थान्तरकल्पनेन निपात्यते इत्युद्घात्यं तदेवोद्घात्यकम् । ( २ ) कथायाः—यथोक्तायाः वृत्तेः उद्घातः—पुनर्ग्रहणं कथोद्घातः । ( ३ ) प्रयोगे वस्तुवृत्ते—अतिशयः ( पुनः प्रयोग–योगात् ) आधिक्यं प्रयोगातिशयः । ( ४ ) प्रवर्तते–कालमासाद्य प्रयुक्तं भवतीति प्रवृत्तकम् । ( ५ ) अवलगितम्—सादृश्येनैकत्र कथांशसमावेशरूपात्मकम् ।

क्रमश एषां लक्षणं सोदाहरणमाचष्टे—

" पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते ॥ "

अगतः—अबोधित इति यावत् । अर्थः—हृद्गतो यैस्तानि । तस्य—हृद्गतस्य, अर्थस्य, गतये—बोधनाय, यथा 'मुद्राराक्षसे'—

सूत्र—" क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम् ।
अभिभवितुमिच्छति बलात्—"

अनन्तरं नैपथ्ये—" आः ! क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलात् ? "

अत्र अन्यार्थवन्त्यपि पदानि हृद्गतार्थबोधनविरहात् पदान्तरैर्योजयित्वा पात्रप्रवेशः ।

यत्र—आमुखे, नराः—अभिनेतृपात्राणि, अगतः—अज्ञातः, अर्थः—अभिप्रायो येषां तानि,—अनधिगताऽभिप्रेतानि, पदानि अन्यैः—प्रयोज्यमानादतिरिक्तैः, पदैः तदर्थगतये—स्वाभिप्रेतसिद्धये, योजयन्ति—मेलयन्ति, तत् उद्घात्यकं नाम आमुखम् ।

यथा महाकविविशाखदत्तरचिते मौर्य—चन्द्रगुप्तचरितसम्बन्धिनि 'मुद्राराक्षस' नाम नाटके—चन्द्रग्रहणनिमित्तं स्वीकृतं समारम्भं ग्रहणायोगे विलोक्य साश्चर्यं सूत्रधारे—" इदानीम्—अनवसरे, सकेतुः—केतुग्रहसहितः, क्रूरो राहुः, असम्पूर्णम्—( पूर्णिमाऽभावेन ) अनधिगतषोडशकलम्, मण्डलं यस्य तं चन्द्रमसं, बलात्—अप्राप्तावसरतया हठात् अभिभवितुम्—ग्रहीतुम्, इच्छति ( किम् ? ) " इत्युक्तवति नैपथ्यगतश्चाणक्यः—" सकेतुः—मलयकेतुसहितः, ( नामैकदेशग्रहणे सम्पूर्णनामग्रहणमिति न्यायात्, क्रूरग्रहः—तादृशो दुर्ग्राह्यो नन्दकुलमन्त्री राक्षस इत्यर्थः । असम्पूर्णमण्डलम्—अनधिकृतसमस्तराष्ट्रम्, चन्द्रमसं—चन्द्रगुप्तं, बलात् पराजेतुमीहते ( किम् ? ) " इत्येवम् अन्यार्थकान्यपि सूत्रधृतः पदानि हृद्गताभिप्रायज्ञानाऽभावेन पदान्तरैः—" आः ! क एष—जनः, मयिचाणक्ये, नन्दकुलकालभुजगे इत्यर्थः । जीवति चन्द्रगुप्तं—

मौर्य्यं बलादाक्रमितुमिच्छति । ” इत्यन्यैः पदै र्मेलयित्वा प्रविशति । अत इयं प्रस्तावना उद्घात्यकाभिधेया ।

अथ कथोद्घातं निश्चिनोति—

“ सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा ।
गृहीत्वा प्रविशेत्पात्रं कथोद्घातः स उच्यते ॥ ”
वाक्यमादाय रत्नावल्यां, वाक्यार्थं गृहीत्वा वेण्याम् ।

यत्र-आमुखाङ्के, सूत्रधारस्य-प्रधाननटस्य, वाक्यम्–आनुपूर्विपदावलीं, वाक्यार्थम्–तदभिप्रायम्, वा-अनयोरेकतरमित्यर्थः गृहीत्वा-आदाय पात्रं प्रविशेत्–रङ्गस्थलमवतरेत्, सः ( विशेष्यनिघ्नम् ) कथोद्घातः कथ्यते ।

श्रीहर्ष विरचितायां रत्नावल्यां—“ द्वीपादन्यस्मादपि जलनिधे र्मध्यादपि दिशोऽप्यन्तात् । आनीय झटिति घटयति विधिरभिमतमभिमुखीभूय ॥” इति सूत्रधारोक्तं समस्तं वाक्यमादाय यौगन्धरायणः प्रविष्टः । भट्टनारायणविरचिते वेणीसंहारे तु “ निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन । रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ॥ ’’ इति सूत्रधृतो वाक्यात् ‘धार्तराष्ट्राः ’-( हंसविशेषार्थे शरद्वर्णनप्रसङ्गे प्रयुक्ताः ) धृतराष्ट्पुत्राः स्वस्था भवन्तु ’ इत्यर्थमादाय-‘ वृथा मङ्गलपाठक ! ...स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ?’ इति वदन् स्फुरद्वदनो भीमसेनः प्रविशति । अत उभयत्र कथोद्घातो नाम प्रस्तावना ।

प्रयोगातिशयं दृष्टान्तपुरस्सरं लक्षयति—

“ यदि प्रयोग एकस्मिन्प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ॥ ”

यथाउत्तरचरिते—

सूत्र०—तत्किमनेन ? एहि, राजद्वारमेव स्वजातिसमयेनोपतिष्ठाव:" इति स्तुतिप्रयोगोद्यते सूत्रधारे, नटेन—

"स्नेहात्सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान् ।
देव्यास्ततो विमनस: परिसान्त्वनाय
धर्मासनाद्विशति वासगृहं नरेन्द्र: ॥"

इति रामस्यान्त:पुरप्रवेशरूपं स्तुतिप्रयोगमतिशयानं प्रयोगान्तरं प्रयुञ्जानेन सीतारामयो: प्रवेश: प्रयोजित: ।

यदि एकस्मिन्प्रयोगे-प्रसङ्गे, अन्य: प्रयोग:—प्रसङ्गान्तरं, प्रयुज्यते-विधीयते, तेन प्रसङ्गान्तरेण, चेत् पात्रस्य-यत्कृते प्रयोग: प्रयुक्त: तस्यैव प्रवेश:, तदा प्रयोगातिशय: (प्रयोगस्य-प्रसङ्गस्य, प्रयोगान्तरेणातिक्रमणं यत्रासौ) भवति ।

स्वजाते:—वन्दिजाते:, समयेन—अनुकूलाचारेण । स्तुतिप्रयोगोद्यते—स्तुते:—अभिनन्दनस्य, प्रयोगे—गाने इत्यर्थ: । उद्यते—प्रस्तुते । नटेन—पारिपार्श्वकेन ।

स्नेहादिति—स्नेहात्—प्रेम्ण:, सभाजयितुम्—पुत्रीजामातृप्रभृतीन् दर्शनाशीर्वादादिभि: अभिवर्धयितुम्, एत्य—आगत्य, अयोध्यापुरीमिति शेष: । अमूनि—सद्योवीतानि, दिनानि उत्सवेन नीत्वा—व्यतियाप्य, जनक:—विदेहराज:, विदेहान्—मिथिलादेशं, गत: । तत:—पितृविरहात्, विमनस:—अधीराया:, देव्या:—सीताया:, परिशान्त्वनाय—विनोदनाय, नरेन्द्र:—महाराजो रामचन्द्र:, धर्मासनात्—न्यायालयात्, वासगृहम्—शयनमन्दिरं, प्रविशति । अत्र सूत्रधारस्य

स्तुतिप्रयोगमतिक्रम्य रामकृत—शयनगृहप्रवेशरूपप्रयोगान्तरेण सीतारामयोः प्रवेशः उत्तरचरिते ( सुप्रसिद्धभवभूतिप्रणीतनाटके ) विहितः । अतः प्रयोगातिशयः ।

प्रवृत्तकं निर्णयते—

" कालं प्रवृत्तमाश्रित्य सूत्रभृद्यत्र वर्णयेत् ।
तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवृत्तकम् ॥

सूत्रभृत्—सूत्रधारः । यथा—

आसादित-प्रकट-निर्मल- चन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तिः ।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः ॥"

ततो रामस्य प्रवेशः ।

सूत्रं—नाटकीयं प्रबन्धं बिभर्तीति सूत्रभृत्—सूत्रधारः, प्रवृत्तम्—उपस्थितम्, कालं—शरदादिकं समयम्, आश्रित्य वर्तमानवसन्तशरदादि समुपलक्ष्य, यत्र—आमुखाङ्गे, वर्णयेत्—सामाजिकसमक्षं विवृणुयात् । तत्—समयवर्णनम्, आश्रयः—आधारः, यस्य तस्य पात्रस्य-गृहीतभूमिकाभिनेतुः, प्रवेशः—रङ्गस्थलेऽवतरणं भवेत् तत्—प्रवृत्तकम् ( समयवर्णने प्रवृत्तत्वात् ) तन्नामकम् आमुखम् ।

दृष्टान्तं दर्शयति—आसादितेति । आसादितः—प्राप्तः, प्रकटस्य—शरत्समये मेघाभावेन अनावृतस्य, ( अतः ) निर्मलस्य—स्वच्छस्य, चन्द्रस्य हासः—प्रकाशः, येन सः ( शरत्समये ) । ( रामपक्षे तु ) आसादितः—धृतः प्रकटः—कोषाद्बहिष्कृततया सर्वैर्दृश्यः, निर्मलः—लौहमलरहितः, चन्द्रहासः—तरवारिः, येन सः । विशुद्धकान्तिः ( एकत्र

गगननिर्मलतया पङ्करहितमार्गतया, अपरत्र सौन्दर्य्याधिक्येन रावणविजय-लाभप्रसादेन च शुभ्रशोभः। एषः—उपस्थितः, शरत्समयः, राम एव, सम्भृताः—वर्द्धिताः, बन्धुजीवाः—पुष्पविशेषाः अन्यत्र सुहृद्गणाः येन तादृशः सन्। गाढतमसं—निविडान्धकारम्, अन्यत्र सातिशयाऽज्ञानम्, उग्रम्—निरन्तरवृष्ट्यादिभिः असह्यम्, अन्यत्र दुर्दमनीयम् दशास्यम्—रावणमिव, घनकालम्—वर्षर्तुम्, उत्खाय—समूलघातमुत्पाट्य निःशेषं विनाश्येत्यर्थः। प्राप्तः उपस्थितः। इति शरद्वर्णनप्रसङ्गे सूत्रधारेण श्लोकेऽस्मिन् उपमानतया उपक्रान्तो रामः शरद्वर्णनमुपलक्ष्यैव प्रविष्टः। इति प्रवृत्तकं नाम प्रस्तावना।

'अवलगितम्' अवगमयति—

"यत्राऽन्यास्मिन्समावेश्य कार्यमन्यत्प्रसाध्यते।
परानुरोधात्तज्ज्ञेयं नाम्नाऽवलगितं बुधैः॥"

समावेश्य—सादृश्यमुद्भाव्य। यथा—अभिज्ञानशाकुन्तले

प्रस्तावनान्ते रूपकस्य प्रकृतेतिवृत्तमारभेत्।

यत्र परस्य-कार्यान्तरस्य, अनुरोधात्, तत्प्रसङ्गसूचनार्थमिति भावः। अन्यस्मिन्-यदनुरोधेन प्रसाध्यते तस्मिन्नेवेत्यर्थः, अन्यत् कार्यम्—किमपि इति वृत्तानुकूलं स्वयमुत्पादितं कृत्यम्, समावेश्य—सादृश्य-मुद्भाव्य सङ्गतिं विधायेत्यर्थः। प्रसाध्यते—सम्पाद्यते, तत् बुधैः 'अवल-गितं'—कार्य्यान्तरे सादृश्येन योजिततया तदभिधेयम्, ज्ञेयम्।

उदाहरणे स्फुटीभवति-यथा शाकुन्तले नाटके-"तवास्मि गीतरागेण हारिणा प्रसभं हृतः। एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा॥" अत्र दुष्यन्त प्रवेशस्य अनुरोधात् तस्मिन् मृगाकृष्टराजवृत्तान्तरूपे कार्ये सादृश्यं प्रकटीकृत्य नटी गीतेन आत्मचित्तहरणरूपं कार्य्यं प्रसाधितम् अतस्तदवलगितम् इति प्रस्तावनाविचारः।

**अथ नाटके अवश्यप्रयोज्यं पताकास्थानकं स्थापयति—**

“ पताकास्थानकं योज्यं सुविचार्येह वस्तुनि । ”

इह रूपके, वस्तुनि—इतिवृत्ते, तल्लक्षणमुक्तं भरतेन,—

“ यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लीनोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकन्तु तत् ॥ ”

यत्र एकस्मिन् विषये चिन्तिते तत्संसक्तः अपरोऽर्थः—अतर्कितेन भावेन बोध्यते, तत्पताकास्थानकं यथा—“रामः कथं प्रियवचना वक्षसि—प्रसुप्तैव ( निर्वर्ण्य सस्नेहम् )

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो—
“रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥
प्रतीहारी ( प्रविश्य ) देव ! उवत्थिदो ।
रामः—अयि कः ?

प्रतीहारी—आसण्णपरिचारओ देवस्स दुम्मुहो ।” अत्र दुर्मुखोपस्थितिरूपार्थे चिन्तिते सीताविरहरूपार्थः सूचितः ।

यथा वा वेण्याम्—

“ पर्याप्तमेव करभोरु ! ममोरुयुग्मम् ” इति दुर्योधनेन कथिते ( प्रविश्य सम्भ्रान्तः कञ्चुकी ) “ देव, भग्नं भग्नम् । ” इत्यनेन वायुना रथकेतनभङ्गरूपार्थे चिन्तिते, भीमेन दुर्योधनोरुभङ्गरूपार्थः सूचितः ।

पताकेति— । इह-नाटके, सुविचार्य-सम्यगालोच्य, वस्तुनि-कथायाम्, पताकास्थानकम् ( यथा पताका-वैजयन्ती, दूरत एव स्थान सूचयति तथैव आगन्तुकं भावं सूचयतीदम् अतोऽन्वर्थकं पताकया ज्ञातम् आस्थानकम् इति नाम ) प्रयोज्यम् । पताकास्थानकं लक्षयति— यत्रेति । यत्र अन्यस्मिन्-वक्ष्यमाणदितिरिक्ते चिन्तिते विचारिते ( विषये ) तल्लीनः-तदन्वितः तत्सम्बद्धः इत्यर्थः । अन्यः—इतरो विषयः, आगन्तुकेन—अनन्वितम् अतर्कितम् उपस्थितेन भावेन प्रयुज्यते तत्पताकास्थानकम् ।

उत्तरचरिते तद्दर्शयति-निर्वर्ण्य-निरूप्य विलोक्येत्यर्थः । इयमिति । गेहे इयं-वक्षसि प्रसुप्ता जानकी, लक्ष्मीः-तद्वत्सौख्यप्रदायिनी । नयनयोः—लोचनयोः, अमृतवर्तिः—सुधानिर्मिताञ्जनशलाका, तद्वन्न-यनानन्दिनीत्यर्थः वपुषि-शरीरे, अस्याः असौ-अनुभूयमानः स्पर्शः, बहुलः चन्दनरसः तद्वत्तनुं शिशिरयतीत्यर्थः । शिशिरः-शीतलः ( चाऽसौ ) मसृणः—चिक्कणः, असौ बाहुः—भुजः, मौक्तिकसरः— मुक्तामाला, सर्वं परमानन्दप्रदानायेति भावः । अस्याः किं न प्रेयः ? जानक्याः किं वस्तु न प्रेमजनकम् ? सर्वमपीत्यर्थः । ( किन्तु हन्त जगति सर्वत्रापवादः ! अत्रापि तथाहि ) यदि-चेत्, विरहस्तु केवलं परम् असह्यः—सोढुं नितरामशक्यः ( न भवेत् तदास्याः सर्वं प्रेयः भवेदिति भावः । )

( 'देव उपस्थितः' इति संस्कृतम् 'आसन्नपरिचारको देवस्य दुर्मुखः' इति च । ) दुर्मुखः—तन्नामा, आसन्नः—सर्वदा समीपस्थः, परिचरतीति परिचारकः—सेवकः । अत्र दुर्मुखागमनरूपे अर्थे—विषये, चिन्तिते—विवक्षिते, भाविसीतावियोगः सूचितः । इति पताकास्थानम् ।

दृष्टान्तान्तरं पुनः प्रदर्शयति—वेणीसंहारे भानुमत्या सह आलपतो दुर्योधनस्य—ममोरुयुग्मम् ' इति वचसा सङ्गतेन 'भग्नं भग्नम्' इत्यत-

र्कितागन्तुकपदेन पवनेन रथध्वजे भग्ने विवक्षिते भावी भीमसेनकृतदुर्योधनोरुभङ्गरूपोऽर्थः सूचितः ।

ननु "वध-युद्ध-विवाहाद्यं वर्जितः" इति निषिद्धानामवश्यसूचनीयत्वे किमाचरणीयं नाटककारेण ? तदेव अर्थोपक्षेपकैः केवलं संवादसम्पादनीयै र्विष्कम्भकप्रभृतिभि र्निर्वाह्यम् । इति तान्निरूपयति—

यत्तु युद्धवधादिकमन्यच्चानुचितमङ्केष्वदर्शनीयं, तत्सर्वमर्थोपक्षेपकै र्विष्कम्भादिभिः सूच्येत । आदिपदेन प्रवेशाङ्कावतारादयो गृह्यन्ते । विष्कम्भको यथा—

" वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥ "

वृत्तवर्तिष्यमाणानाम्—अतीतानां भाविनाञ्च निदर्शकः—सूचकः, मध्येन मध्यमाभ्यां वा पात्राभ्यां प्रयोजितः । यथा रत्नावल्यां प्रथमाङ्कादौ, अभिज्ञानशकुन्तले च चतुर्थाङ्कादौ ।

" प्रवेशकोऽनुदात्तोक्त्या नीच-पात्र-प्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥"

अनुदात्तोक्त्या—प्राकृतवचनेन, अङ्कद्वयान्तरिति प्रथमाऽङ्केऽस्य प्रतिषेधः । यथा वेण्यां तृतीयाङ्कादौ ।

" अङ्कान्तः सूचितः पात्रैस्तदङ्कस्याविभागतः ।
यत्राऽङ्को वतरत्येषोऽङ्कावतार इति स्मृतः ॥ "

यथा—अभिज्ञानशकुन्तले पञ्चमाङ्कान्ते पात्रैः सूचितः षष्ठाङ्कः तदङ्कस्य अङ्गविशेष इवाऽवतीर्णः ।

वृत्तेति—वृत्तानाम्, भूतानाम्, वर्तिष्यमाणानाम्—भाविनाम्,

कथांशानाम्—इतिवृत्तविभागानाम्, निदर्शकः—ज्ञापकः, संक्षिप्तार्थः—अल्पशब्देन प्रकटिताऽभिप्रायः, मध्यपात्रेण—उत्तमाधमयो र्व्यतिरिक्तेन अभिनेत्रा, प्रयोजितः—अभिनीतः ( दृश्यविभागः ) विष्कम्भो भवति । यथा शाकुन्तले—मध्यपात्राभ्यां प्रियंवदाऽनुसूयाभ्यां शकुन्तलायाः विवाहादिवृत्तान्तः संक्षिप्य सूचितः । विष्कम्भक प्रभृतयः सदा आदावेव निबन्धनीयाः इत्यवधेयम् ।

प्रवेशक इति—अनुदात्तया--उदात्तसंस्कृतभिन्नया प्राकृतवचनेनेत्यर्थः । अङ्कद्वयस्य अन्तः—मध्ये (एतेन प्रथमाङ्के तदभावात्तस्य निषेधः ) नीचपात्रेण—निम्नश्रेणिकपात्रेण, अभिनीतः (विषयः) प्रवेशको भवति । शेषं संक्षिप्तार्थं—वृक्षवर्तिष्यमाणकथानिर्देशादि विषकम्भके यथा तथा अत्राऽपि योजनीयमिति शेषः । यथा वेणीसंहारे तृतीयाङ्कादौ ।

अङ्केति— । अङ्कान्ते—कस्यचनाङ्कस्यावसाने, पात्रैः—सूचितः—प्रकटितः, तदङ्कस्य—यदङ्कस्यावतारस्तस्य, अविभागतः—अपरिच्छेदतः, तत्सम्बद्धतयैवेति भावः । यत्र अङ्कः अवतरति—प्रयुक्तो भवति सः, अङ्कस्याऽवतारः—स्मृतः-- उक्त इत्यर्थः । यथा शाकुन्तलस्य पञ्चमाङ्के ।

'पञ्चसन्धिसमन्वितम्' इति नाटकलक्षणे उद्धृतस्य सन्धेः किंस्वरूपम् ? के च भेदाः ? इति दर्शयति--

"अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।"

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः । तद्भेदानाह विश्वनाथः—

"मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिः ॥"

अन्तरेति— । एकान्वये—एकोद्देश्ये, ( स्थितानां कथांशानामिति शेषः ) अन्तरा—मध्ये, एकेन केनाप्यन्येनेत्यर्थः । अर्थेन—प्रयोजनेन, सम्बन्धः—संयोगः, सन्धिः, सम्यक् एव प्रयोजनतया धीयते—कथांशो

ऽस्मिन्निति सन्धिः, उच्यते—नाट्यशास्त्रविद्भिरिति शेषः । तदेव वृत्तौ,—एकेन—समानेन, प्रयोजनेन—हेतुना, सम्बद्धानाम्—इतिवृत्तिभागानाम्, पोषणाय—विस्तारणाय हेत्वन्तरेण एकत्र यथास्थानं संयोजनं 'सन्धिः' ।

मुखमिति— । "मुखं बीजसमुत्पत्ति र्नानार्थरससम्भवा ।" यत्र विविधरसोद्भूतस्य "स्तोकोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा ।" इत्युक्तलक्षणस्य बीजस्य समुत्पत्तिः—सम्यक् प्रारम्भः, तत् 'मुखं' नाम सन्धिः । यथा शाकुन्तले--शृङ्गारादिविविधरसान्वितस्य दुष्यन्तशकुन्तलाऽनुरागरूपस्य बीजस्य प्रथमाङ्के उत्पत्तिः, अत इदं मुखं नाम सन्धिः । एतस्य उपक्षेपपरिकरादीनि द्वादश अङ्गानि प्रतिपादितानि ।

प्रतिमुखमिति— । 'लक्ष्याऽलक्ष्यतयोद्भेदस्तस्य 'प्रतिमुखं' भवेत् ।' तस्य बीजस्य—क्वचिल्लक्ष्यतया--स्फुटतया--क्वचित् अलक्ष्यतया—अस्फुटतया, उद्भेदः—किञ्चित् प्रकाशनम्, 'प्रतिमुखं' नाम सन्धिः । यथा शाकुन्तले एव द्वितीयाङ्के राज्ञोऽनुरागो नाऽतिप्रकटः ।

गर्भ इति । "फलप्रधानोपायस्य प्रागुद्भिन्नस्य वस्तुनः । गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः ॥" प्राक्--प्रथमम्, उद्भिन्नस्य--प्रतिमुखसन्धौ किञ्चित्प्रकटीभूतस्य, प्रयोजनसिद्धहेतुभूतस्य वस्तुनः--इतिवृत्तस्य, ह्रासान्वेषणवान्-- क्वचिद्ध्रासेन क्वचिदन्वेषणेन युक्तः मुहुः—पुनः पुनः, यत्र उद्भेदः—प्रकटीभवनं, स 'गर्भ' नामा सन्धिः । यथा तत्रैव तृतीयाङ्के नायकनायिकयोरनुरागस्य सम्यक् प्रकाशः पुनः शकुन्तलाप्रस्थानेन ह्रासश्च कियानिति गर्भसन्धिः ।

विमर्ष इति । "यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः । शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः ॥" यत्र प्रधानफलार्थप्रयत्नः गर्भतः-तृतीयसन्धेः, अधिकः स्फुटः । किन्तु शापाद्यैः—विविधबाधाभिः, सान्तरायः—सविघ्नः, स विमर्षः चतुर्थः सन्धिः । यथा तत्रैव शकुन्तलाया उत्कृष्टीभूतोऽनुरागो दुर्वाससः शापेन विघ्नितः ।

उपसंहृतिः— । "बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।

एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ॥" बीजवन्तः—प्रधानोद्देश्ययुक्ताः, विच्छिन्नाः मुखादिसन्धयः, एकार्थम् एकप्रयोजनं यथा तथा उपनीयन्ते यत्र तत् निर्वहणम् ( उपसंहृतिनामान्तरं ) पञ्चमः सन्धिः । यथा तत्रैव अन्तिमे सप्तमेऽङ्के दुष्यन्तशकुन्तलासङ्गत्या विप्रकीर्णानां समेषां कार्याणां जात उपसंहारः ।

नाटकोपयुक्तान् सङ्केतान् अङ्कते—

"सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ।
रहस्यं कथ्यतेऽन्यस्य परावृत्याऽपवारितम् ॥
त्रिपताक करेणान्यानपवार्यान्तिरा कथाम् ।
अन्योन्यामन्त्रणं यत् स्यात्तज्जनान्ते जनान्तिकम् ॥
किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम् ॥"
"प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते ॥"

सर्वेति— । सर्वेषां—पात्राणाम्, श्राव्यम्—श्रवणार्हम्, प्रकाशं स्यात् । अश्राव्यं ( पात्रान्तराणामिति शेषः । समाजिकैस्तु सर्वं श्रोतव्यमेव । ) स्वगतम्—आत्मगतम्, मतमिष्टम् । रहस्येति । परावृत्य— पात्रादन्यतोमुखं विधाय, अन्यस्य—अभिधानविषयीभूतपात्रस्य रहस्यं गोप्यं यत् कथ्यते तदपवारितम् । त्रिपताकेति । कथामन्तरा—कथाया मध्ये, ( अन्तरायोगे द्वितीया ) अन्यान्—प्रतिपाद्यपुरुषादतिरिक्तान्, तिस्रः पताकाः—पताकावत् ऊर्द्ध्वंकृता अङ्गुल्यो यत्र स त्रिपताकः स च करश्च तेन, अपवार्य–निवार्य जनान्ते-लोकसमीपे, यत् अन्योऽन्यामन्त्रणं-परस्परसम्भाषणं, तज्जनान्तिकं कथितम् । किं ब्रवीषीति । पात्रं-रङ्गभूमि-स्थितमभिनेतारं विनैव आकाशाऽभिमुखीभूय, अनुक्तमपि श्रुत्वा इव विधाय 'किं ब्रवीषि' इत्यादि यत् यस्माद्वक्ति तस्मादिदमाकाशभाषितम् । ण्यन्तक इति— । ण्यन्तकः साधिः गत्यर्थाय प्रयुज्यते । यथा शाकुन्तले

'तापसौ—साधयावस्तावत् ।' गच्छाव इत्यर्थः । सम्भाषणप्रधाने रूपके केन कः केन नाम्ना सम्बोधनीयः । इति कारिकाभि र्निर्णीयते—

"राजा स्वामीति देवेति भृत्यै र्भट्टेति चाधमैः ।
राजर्षिभि र्वयस्येति तथा विदूषकेण च ॥
राजन्नित्यृषिभि र्वाच्यः सोऽपत्यप्रत्ययेन च ।
स्वेच्छया नामभि र्विप्रै र्विप्र आर्येति चेतरैः ॥
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ।
वाच्यौ नटी सूत्रधारावार्यनाम्ना परस्परम् ॥
सूत्रधारं वदेद्भाव इति वै पारिपार्श्वकः ।
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ॥
वयस्येत्युत्तमै र्हंहो मध्यै रार्येति चाग्रजः ।
भगवन्निति वक्तव्या सर्वै र्देवर्षिलिङ्गिनः ॥
वदेद्राज्ञीं च चेटीश्च भवतीति विदूषकः ।
'आयुष्मन्' रथिनं सूतो वृद्धस्तातेति चेतरैः ॥
वत्स—पुत्रक—तातेति नाम्ना गोत्रेण वा सुतः ।
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्येति चाधमैः ॥
विप्रैरयममात्येति सचिवेति च भण्यते ।
उपाध्यायेति चाऽऽचार्य्यः कुमारो भर्तृदारकः ॥
सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः ।
वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृदारिका ॥
पण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति ॥

राजेति । भृत्यैः—अनुचरैः, राजा 'स्वामिन्—देव' इत्यादिना वाच्यः ।

अधमैः—नीचैः, 'भट्टेति' वाच्यः। राजर्षिभिः विदूषकेण—('कुसुम वसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः। हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः') इत्युक्तलक्षणेन, 'वयस्ये' ति वक्तव्यः। पुनः ऋषिभिः राजा 'राजन्' इति पदेन एवम् अपत्यप्रत्ययेन—अपत्यप्रत्ययान्तेनेत्यर्थः (वासुदेव, पार्थ, इत्यादिना) वक्तव्यः। विप्रैः—वेदाध्यायिभि र्द्विजैः स्वेच्छया स्वयमुदीरितेन अपत्यप्रत्ययान्तेन वा अथवा नाम्ना सः विप्रः सम्बोधनीयः। इतरैः—विप्रादन्यैः 'आर्य' इति पदेन विप्रः वक्तव्यः। नटीसूत्रधारौ—परस्परम्—अन्योऽन्यम्, 'आर्य'—नाम्ना वाच्यौ। (आर्यश्च आर्या च तयोः नाम्ना) सूत्रधृता नटी 'आर्ये'—इति, नट्या च सः 'आर्य' इति पदेन सम्बोधनीयः। पारिपार्श्वकः—सहायकनटः, सूत्रधारं भाव इति वदेत्। सूत्रधारस्तं 'मारिष' इति प्रतिपादयेत्। सम्बोधनपदानि श्रेण्यां विभजति—हण्डे इति—। अधमैः—नीचैः, समाः—आत्मतुल्याः, अधमा इत्यर्थः। हण्डे इत्यनेन वक्तव्याः। उत्तमैः समाः (उत्तमाः) वयस्येति मित्रवाचकशब्दैः, मध्यैः मध्याः, 'हंहो' इति सम्बोधनेन। अग्रजः—ज्येष्ठः, कनिष्ठैरिति शेषः। 'आर्य' इत्येवम् अभिमुखीकरणीयः। देवर्षिचिह्नधारिणः, सर्वैः 'भगवन्' इति पदेन अभिधेयाः। विदूषको राज्ञीं—राजमहिषीम्, चेटीम्—तत्सहचरीम्, 'भवती' ति वदेत्। सूतः—सारथिः, रथिनम्—रथारोहिणम्, 'आयुष्मन्'—इति। इतरैः—लघुवयोभिः, वृद्धः—वर्षीयान्, 'ताते' त्यभिधेयः। पुत्रः, छात्रः, लघुभ्राता च 'वत्स—पुत्रक—तात' इति, नाम्ना—अभिधानेन, गोत्रेण—अपत्यप्रत्ययान्तेन 'काश्यप—दौर्गादत्ति, प्रभृतिना, वक्तव्यः। अधमैः अमात्यः—मन्त्री, 'आर्य'—इति वदनीयः। विप्रैः—द्विजैः, अयम्—मन्त्री, अमात्य—सचिव'—इत्यादिपर्यायपदेन—निगद्यते। आचार्यः—उपनीय वेदाध्यापयिता, 'उपाध्याय'—इति नाम्ना (शिष्यैः) भण्यते। कुमारः—मृदु—वयोवान् राजकुमारः, 'भर्तृदारक—सौम्य—भद्रमुख—इत्येवम् अभिधेयः (उत्तममध्यमैरिति शेषः) अधमैस्तु 'कुमारक' इति वक्तव्यः। राज्ञः कन्या, 'भर्तृदारिका—इत्येवं प्रकृतिभिः—प्रजाभिः, वाच्या। नीचाम्—अधमाम्, चेटीम्—परिचारि-

काम्, सखीम्—सहचारिणीम्, प्रति 'हण्डे हञ्जे हला' इति आह्वानं—सम्बोधनम्, योजनीयम्।

इति दृश्यकाव्यनिरूपणम्।

एवं दृश्यकाव्यस्य सप्रपञ्चं लक्षणं प्रदर्श्य श्रव्यकाव्यं विवेचयितुं कारिका अवतारयति—

"श्रव्यं श्रोतव्यमात्रं तत् त्रिविधं परिकीर्तितम्।
पद्यं गद्यञ्च मिश्रञ्च पद्यं चतुष्पदी मतम् ॥
जाति वृत्तमिति द्वेधा जाति र्मात्राकृतेन तत् ।
वृत्तमक्षरसङ्ख्यातं, पद्येनैकेन मुक्तकम् ॥"
"द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकै र्विशेषकम् ।
कलापकं चतुर्भिः स्यात्तदूर्द्ध्वं कुलकं स्मृतम् ॥

श्रव्यमिति—। श्रोतव्यमात्रम्—श्रवणीयमेव नतु दर्शनीयम्, मात्र-पदमभिनेयतां व्यवच्छिनत्ति । यद्यपि नाटकादावपि श्रवणीयत्वमस्ति किन्तु तस्याभिनयार्हतयातन्मात्रत्वं नास्ति । श्रव्यं नाम काव्यम्, भवति । निबन्धनभेदात्तत्त्रिविधम्—गद्यम्—वर्णमात्रादिच्छन्दोनियमरहितम् । पद्यम्—छन्दोबद्धम् । मिश्रम्—गद्यपद्योभयसंसृष्टिः । तत्र पद्यं चतुर्णां पदानां समाहारः चतुष्पदी चरणचतुष्टयात्मकम्, मतम्—इष्टम् । तत्पुनर्द्विप्रकारकम्—जातिः,-मात्रायाः-ह्रस्वोच्चारणकालात्मकनियतायाः, कृतम्-रचना ( भावे क्तः ) तया युक्तमित्यर्थः । पद्यं जातिः । यथा—आर्यादि । अक्षरैः संख्यातम्—परिगणितम्, वृत्तम्—तन्नाम पद्यम् यथा—अनुष्टुबादि ।

पुनरन्वयसम्बन्धेन पद्यं भिनत्ति—एकेन पद्यान्तरान्वयरहितेनेत्यर्थः, पद्येन मुक्तकं भवति । द्वाभ्याम् अन्विताभ्यामित्यर्थः युग्मम्, त्रिभिः विशेषकम्, चतुर्भिर्निबद्धं कलापकम् । तदूर्द्ध्वं— ततोऽधिकैः पद्यैः

सम्बद्धम्, कुलकं स्मृतम्। मात्रावृत्तिरहितं गद्यमपि मुक्तकादिभेदैः पञ्चधा। तत्र मुक्तकम्—समासशून्यम्, वृत्तगन्धि—वृत्तलक्षणस्यांशेन अनुसारि, उत्कलिकाप्रायम्—दीर्घसमासनिरन्तरम्, चूर्णकम्—विरलसमासम्, सट्टकम्—सरसगद्यनिचितम्।

रचनावैलक्षण्येन भेदमुपगतानि काव्यानि विभजन् प्रथमतो महत्त्वपूर्णं विविधवर्णनेन सर्वतो विलक्षणं पद्यमयं महाकाव्यं व्याख्याति—

"सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्।
आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्॥
इतिहासकथोद्भूतमितरद्वा सदाश्रयम्।
चतुर्वर्गफलोपेतं चतुरोदात्तनायकम्॥
नगरार्णवशैलर्तुचन्द्रसूर्यादिवर्णनैः।
अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम्॥
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः।
सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम्।
काव्यं कल्पान्तरस्थायि जायते सदलङ्कृति॥
यथा रामायण–रघुवंश–शिशुपालवध–नैषधचरितादि।"

सर्गेति—। सर्गैः—तन्नामपरिच्छेदैः, बन्धः—निबन्धनं, यस्य तादृशो वाक्यसमूह इति शेषः, महाकाव्यम्। तस्य लक्षणं—स्वरूपम्, उच्यते—तस्य—महाकाव्यस्य, मुखम्—प्रारम्भः, आशीः—मङ्गलाशंसनम्, नमस्क्रिया—देवतादिनिमित्तकप्रणामव्यापारः, वस्तुनः—कथायाः, निर्देशः—उल्लेखः, वा भवति। एतैरेव महाकाव्यमारब्धव्यमिति भावः। इतिहासकथाभ्यः—पुरावृत्तघटनाभ्यः, उद्भूतम्, उद्गतम्, तत्कथामवलम्ब्य रचितमित्यर्थः। इतरद्वा—अन्यद्वा, कविना स्वयमुपनिबद्धं वृत्तं वेत्यर्थः। सन्—शोभनः, आश्रयः—कथारूप आधारः, यस्य तत्। चतुर्वर्गस्य—धर्मार्थ-

काममोक्षरूपस्य, फलेन—परिणामेन—तत्साधनेनेति तात्पर्यम्। उपेतम्-युक्तम्। चतुरः-कलासु निपुणः, उदात्तः—प्रशस्तगुणयुक्तः, नायकः—नेता, यत्र तत्। नगरस्य-पुरस्य, अर्णवस्य—सागरस्य, शैलस्य-पर्वतस्य, ऋतूनाम्—वसन्तादीनाम्, चन्द्रसूर्यादीनाम् तदन्वित-प्रातः-सायं-दिवा-नक्त-प्रभृतीनामिति तात्पर्यम्, वर्णनैः—विवरणैः, अलङ्कृतम्—भूषितम्। असंक्षिप्तम्—विस्तीर्णम्, दीर्घवर्णनायुक्तमिति भावः। रसैः—शृङ्गारादिभिः, भावैः—"सञ्चारिणः प्रधानानि देवादिविषया रतिः—" इत्युक्तलक्षणैः, निरन्तरम्—निचितम् निरवच्छिन्नमित्यर्थः। श्रव्याणि-श्रुतिमधुराणि वृत्तानि—छन्दांसि चरितानि च, तैः, सुसन्धिभिः—साधुरीत्या प्रयुक्तैः सन्धिभिः, मुख-प्रतिमुख-गर्भ-विमर्षोपसंहृतिभिः, सर्वत्र भिन्नवृत्तान्तैः—नैकविधवृत्तैः (वैरुच्यप्रतिपादकत्वादन्यथेतिभावः)-नवनवोदन्तैः, इति भावः। सत्यः—शोभनाः, अलङ्कृतयः—उपमादयोऽलङ्काराः, यत्र तत्। काव्यं कल्पान्तरस्थायि—सर्वदा स्थितिशीलं जायते। यावच्चन्द्रदिवाकरौ काव्यं वर्तते इति भावः।

एतस्यैव अंशमनुसरतः खण्डकाव्यस्य स्वरूपं काव्यान्तराणां च लक्षणं लक्षयति—

"खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च॥"

यथा मेघदूतादि।

"वृत्तबन्धोज्झितं गद्यं तद्भेदास्तु कथादयः।"

यथा कादम्बर्यादि।

"गद्यपद्यमयं मिश्रं चम्पूरित्यभिधीयते॥"

पद्यमिश्रत्वञ्चात्र बाहुल्येनेति ज्ञेयम्। ततश्च कादम्बर्यादिषु एक—द्वि—त्रिपद्यसत्त्वेऽपि न तेषां गद्यकाव्यत्वहानिः।

इति दृश्यश्रव्यभेदेन काव्यप्रभेदनं चतुर्थशिखा।

खण्डेति— । काव्यस्य—आशीर्नमस्क्रियादिलक्षणशालिनो महाकाव्यस्य, एकदेशं-गिरिसागरवसन्तादिवर्णनरूपम्, अनुसर्तुं शीलं यस्य तत् खण्डकाव्यम् ।

वृत्तेति । वृत्तं—नियमेन निवेशितवर्णसमुदायशालि वाक्यबन्धनम्, तेन यो बन्धः—रचना, तेन उज्झितम्—मुक्तम्, गद्यम् । तस्य भेदाः—तन्निबद्धकाव्यप्रकारास्तु कथादयः । आदिपदेन आख्यायिकादयः । कथायाः स्वरूपं यथा—"प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः ।"

गद्यपद्येति । गद्यपद्यमयम्-प्रायः समानभावेन गद्यपद्योभयसंसृष्टिः, चम्पूः तदाख्यः काव्यप्रकारः प्रतिपाद्यते । पद्यस्थितिरत्र बाहुल्येन गद्यसमकक्षतयेति भावः, बोद्धव्या । अन्यथा 'कादम्बर्यादिषु गद्यकाव्येषु कतिपयपद्यानां सद्भावेन तत्रापि चम्पूत्वं प्रसज्येत । सति तु तस्मिन् गद्यसमुद्रे आपतन्त्यः पद्यनद्यः अन्तर्विलीयन्ते ।

इति स्नेहवर्षिण्यां चतुर्थः कल्पः ।



# पञ्चमशिखा ।

काव्यस्य स्वरूपं भेदांश्च यथायथं निर्वर्ण्य 'अनिष्टं निवार्य्य चिन्तनीयमिष्टम्' इति नियमं स्मरन् उपादेयतासम्पादकेभ्यो गुणरीत्यलङ्कारेभ्यः प्रागेव हेयं दोषं प्रस्तौति—

"काव्यापकर्षका दोषास्ते पुनः पञ्चधा मताः ।
पदपदांशवाक्यार्थरसानां दूषणेन हि ॥"

ये खलु पदवाक्यरसादिदूषणद्वारेण काव्यस्यापकर्षमुत्पादयन्ति, त नाम दोषनाम्ना कथ्यन्ते । ते पुनः पदपदांशवाक्यार्थरसदूषणद्वारेण काव्यं दूषयन्तीति प्रथमतः पञ्चविधाः ।

काव्यस्य—रसवत्पदसन्दर्भस्य, अपकर्षकाः—रसादिप्रतीतिविघात-

कतया उपादेयताविनाशिनः, दोषाः । अर्थात् 'उद्देश्यप्रतीति विघातकत्वं दोषत्वम्' । उद्देश्यायाः—सरसे रसविषयिण्याः, नीरसे अर्थाश्रयायाः; प्रतीतेः—काव्यानन्दानुभूतेः सर्वथाऽप्रतीति-चमत्काराभाव-विलम्बोपस्थितिरूपस्त्रिविधोऽपकर्षः । तद्यथा—१ रसार्थप्रतीतिप्रतिबन्धः, २ रसार्थचमत्कारप्रतीतिनिरोधः, ३ रसाऽर्थप्रतीतिविलम्बनम् । ते पुनः श्रुतिकटुत्वादिवक्ष्यमाणावान्तरभेदाद्भिन्नाः प्रथमतः पञ्चविधा भवन्ति—१ पदगतः, २ पदांशगतः, ३ वाक्यगतः, ४ अर्थगतः, ५ रसगतश्च ।

ननु पदांशे 'सिद्धयै' अत्र 'द्धयै' गतस्य, पदादौ 'कार्तार्थ्य' मित्यादौ तावन्मात्रस्थितस्य दोषस्य सद्भावेन कथं काव्यमात्रं दुष्टमिति चेत्, शृणु—'ते पुनः पद-पदांश-वाक्यार्थ-रस-दूषणद्वारेण काव्यं दूषयन्ति । अयं भावः । यथा शरीरी शरीरस्य तदवयवीभूतस्य करचरणादेश्च वैकल्येन एवं करावयवाङ्गुले र्विकृत्या च त्रिकृतः सम्भाव्यते तथैव पद-पदांशादिदूषणेन अवयवगतेन अवयविनः काव्यस्यापकर्षः सर्वथा उपपन्नः ।

सम्प्रति पदवाक्यादीनां सम्मिलितदोषेभ्यः पृथग्भूतं पदमात्रावस्थितमेव दोषं त्रिविधं प्रथममभिधत्ते—

निरर्थकाऽसमर्थत्वे च्युतसंस्कृतित्वं च पदगतान्येव ।

निरर्थकत्वम्—अर्थहीनत्वम् । यथा—'च, वा हा' ऽऽदीनि वृत्तपूरणमात्रप्रयोजनानि रामायणादिषु बाहुल्येन द्रष्टव्यानि ।

असमर्थत्वम्—तदर्थे पठितमपि तस्यावाचकत्वम् । यथा—'कुञ्जं हन्ति कृशोदरी' इत्यत्र हन्तीति गमनार्थे पठितमपि न समर्थम् ।

च्युतसंस्कारत्वम्—व्याकरणलक्षणहीनत्वम् । यथा—"गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः ।" आङो यमहनः [ १।३।२८ पा० ] स्वाङ्गकर्मकाच्च [ १।३।२८ पा०

वा० ] इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्याऽकर्मकस्य चात्मनेपदं नियामितम्, इह तु तदुल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम् ।

निरर्थकेति—भावप्रत्ययस्य उभयत्राऽन्वयः । निरर्थकत्वम्, असमर्थत्वम्, च्युतसंस्कृतित्वम् । इयन्ति त्रीणि पदगतान्येव—पदमात्रगतानि । एव-पदं पदांशवाक्ययो र्व्यवच्छेदकम् । निरर्थकत्वं पदांशे न युज्यते 'समुदायो ह्यर्थवान् तस्यैकदेशोऽनर्थकः' इति पदस्यैकदेशस्य पदांशस्य सर्वत्र निरर्थकत्वात्तत्र नेदं दोषाय; वाक्यस्यापि निरर्थकत्वं न सम्भवति। योग्यतादियुजामर्थवतामेव पदानां परस्परसम्बद्धतया वाक्यत्वं जायते । एवमन्यत्रापि पदमात्रगतत्वं बोध्यम् ।

निरर्थकत्वम्—अर्थहीनत्वम् । वस्तुत उदाहृतानां 'चादीनां कश्चन अर्थोऽस्त्येव । किन्तु इह अर्थपदं प्रस्तावानुकूलाभिप्रायपरम् । अतः—उपयुक्तार्थशून्यत्वं निरर्थकत्वम् । रामायणभारतादौ छन्दःपूरणाय प्रयुक्तानां निरर्थकानां 'च वा तु हि वै'—प्रभृतीनां बाहुल्यम् । ( अस्तु नाम किन्तु रत्नाश्रये सिन्धौ क्षुद्राणां शम्बूकादीनामपि यथा स्थितिः, तथा विविधगुणालङ्कृतिसद्मनि रामायणादौ निरर्थकपदस्थितिः "एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः" इति न्यायात् न वैरस्यावहाय कल्पते । )

असमर्थत्वम्—अनुशासने तदर्थे परिगणितस्यापि तस्य—प्रत्ययाद्यसंवलितस्य, अवाचकत्वम्—तदर्थप्रकाशनाक्षमत्वम् । कुञ्जकर्मक कृशोदरीकर्तृक गमनरूपार्थे 'कुन्जं हन्ति कृशोदरी' इति वाक्ये निबद्धस्य हन् धातोः 'हन् हिंसागत्योः' इति धातुपाठे पठितस्याऽपि गमनार्थे नास्ति सामर्थ्यम् । नचैतेन तदर्थे असामर्थ्येन पाठस्य वैयर्थ्यं शङ्क्यम्; पदान्तरसहकारेण तदर्थस्य स्फुटत्वात् । यथा हन्प्रकृतेरेव पद्धत्यादौ पद्भ्यां हन्तीति गतावपि उपयोगः ।

च्युतसंस्कारत्वम्--च्युतः—विनष्टः' संस्कारः—व्याकरणलक्षणम्, यत्र तस्य भावस्तत्त्वम्। तदुदाहरति गाण्डीवीति—। किरातार्जुनीये युध्यमानयोः किरातवेषिणः शिवस्य, अर्जुनस्य च वर्णने पद्यार्धमिदम्। गाण्डीवी—तदाख्यधनुर्धारी अर्जुनः, त्रिनेत्रतया विषमाणि विलोचनानि यस्य तस्य शिवस्य, कनकशिलानिभम्—स्वर्णोपलतुलम्, वक्षः—उरस्थलम्, भुजाभ्याम् आजघ्ने—आजघान, ताडयामास इत्यर्थः। इह 'अकर्मका' दिति पूर्वसूत्राऽनुवृत्त्या 'स्वाङ्गकर्मकाच्चे' ति वार्तिकसङ्गत्या च 'अकर्मकात्स्वाङ्गकर्मकादेव आङ् पूर्वकात् यमः हनश्च धातोः आत्मनेपदं स्यात्' इत्यर्थकेन "आङो यम हनः" इति सूत्रेण अर्जुन-कर्तृक-शिवसम्बन्धि-पराङ्गकर्मकताडनव्यापारे नास्ति आत्मनेपदिनो हन्धातोः शक्तिः। अतस्तदनुशासनोल्लङ्घनेन अत्र च्युतसंस्कारत्वरूपो दोषः। नचास्य विलोचनस्येत्यादिपदान्तरसङ्गेन दुष्टतया 'आजघ्ने' इह नास्ति पदमात्र दोष इति शङ्क्यम्। पदान्वयव्यतिरेकविधिना 'आजघ्ने' इत्यस्यैव दुष्टत्वात्, दोषालङ्कारादौ यो यदन्वयव्यतिरेकी स तदाश्रयः' इति नियमात्।

अथ पद-पदांश वाक्यगतान् साधारणान् दोषान् ब्रूते—

"दुःश्रवाऽनुचितार्थत्वे ग्राम्यत्वं निहतार्थता।
क्लिष्टत्वमप्रतीतत्वं विरुद्धमतिकारिता॥
अविमृष्टविधेयांशभावः सन्दिग्धता तथा।
पदवाक्याश्रिता दोषाः पदांशेऽप्येषु केचन॥"

पददोषः-एकस्य सुप्तिङन्तरूपस्य दुष्टतया; अनेकपदसमुदायस्य दुष्टतया वाक्यदोषः; पदावयवस्य दुष्टतया पदांशदोषः। शरीरेऽपि कस्यचन एकस्याऽङ्गस्य दोषेण 'हस्तो दुष्टः, अक्षि दुष्टम्' अङ्गावयवस्य च दुष्टतया 'करावयवो नखो दुष्टः' इत्येवमुच्यते। किन्तु अनेकानि यदा अङ्गानि भवन्ति दुष्टानि तदा अस्य सर्वं शरीरं दुष्टमित्युच्यते तद्वदिहापीति भावः।

दुःश्रवत्वम्—श्रुतिदुःखावहत्वम् । अनुचितार्थत्वम्—अयोग्यार्थप्रकाशनत्वम् । ग्राम्यत्वम्-नागरिकजनाऽप्रयोज्यत्वम् । निहतार्थत्वम्-प्रसिद्धार्थपरित्यागेन अप्रसिद्धार्थे प्रयुक्तत्वम् । क्लिष्टत्वम्—अर्थप्रतीतिव्यवहितत्वम् । अप्रतीतत्वम्—एकत्रैव प्रसिद्धतया तदर्थेऽन्यत्र प्रयोगाभाववत्त्वेऽपि तत्र प्रयुक्तत्वम् । विरुद्धमतिकारित्वम्—विरुद्धार्थप्रकाशितत्वम् । अविमृष्टविधेयांशत्वम्—उद्देश्यविधेयक्रमत्यागत्वम् । सन्दिग्धत्वम्—निश्चितार्थपरामर्शशून्यत्वम् । एते पदगताः, वाक्यगताश्च दोषाः । एषु उक्तेषु दोषेषु, केचन एव न तु सर्वे, योग्यताविरहादिति भावः । पदांशगताः सन्ति । यद्यप्यत्र 'दुःश्रवत्व-निहतार्थत्वे द्वावेव दोषौ पदांशे सम्भविनौ; तथापि अनुक्तान् नेयार्थाश्लीलादीन् दोषान् अभिसन्धाय 'केचन' इति बहुवचनमुक्तम् ।

उक्तदोषाणां लक्षणोदाहरणानि विवेचयति—

दुःश्रवत्वं—परुषवर्णतया श्रुतिदुःखावहत्वम् ।

पदगतं यथा—

"बन्धुभिः सादरं नेत्रैः पीयमानेव सा मुहुः ।

सुताननेन्दुपूर्णाङ्का कार्तार्थ्यं लभतां कदा ॥

अत्र कार्तार्थ्यमिति श्रुतिकटुः ।

वाक्यगतं यथा—

"सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनतार्प्सीत्सममंस्त बन्धून् ।

व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥"

पदांशेऽप्येतत् यथा—

" तद्गच्छ सिद्ध्यै कुरु देवकार्यम्" इत्यत्र 'द्ध्यै' इति पदांशं दुष्टमाहुः ।

दुःश्रवत्वमिति—। परुषाणाम्—टवर्गषकाराणां रेफयुक्तानाञ्च वर्णानां सत्तया श्रुतिदुःखावहत्वम्—कर्णकटुताजनकत्वम् । तच्च त्रिविधाश्रयम्—पदगतं, वाक्यगतं, पदांशगतम् । तत्र पदघटक—नेककर्णकटुवर्ण—पारुष्यप्रयुक्तं पदगतं दुःश्रवत्वम् । वाक्य घटक नैकश्रुतिकटु—पद–पारुष्यप्रयुक्तं वाक्यगतम् । पदघटकैकैवकर्णोद्वेजकाक्षरप्रयुक्तं पदांशगतम् ।

पदगतमुदाहरति-बन्धुभिरिति—। बन्धुभिः सुहृद्भिः, सादरम्—सन्ततिशालितया सस्नेहम्, मुहुः—पुनः पुनः अतृप्तभावेनेत्यर्थः । पीयमाना—अपलकनयनेन विलोक्यमाना, सुतस्य आननेन्दुना—मुखचन्द्रेण, पूर्णाङ्का—सम्भावितक्रोडा, सा कदा 'कर्तार्थ्यम्'—कृतकृत्यताम्, ( पुत्रलाभजन्यामिति भावः ) लभताम् । इह 'कार्तार्थ्यम्' इति पदे रेफयुजोस्तथयोरलघ्वोर्द्वयोः श्रुतिकटुवर्णयोः सद्भावेन पदगतं दुःश्रवत्वम् ।

वाक्यगतं प्रस्तौति—सोऽध्यैष्टेति । दशरथयशोवर्णने 'भट्टि'—पद्यमिदम् । सः—दशरथः, वेदान्—चतस्रोऽपि श्रुतीः, अध्यैष्ट—अधीतवान् , तिस्रः— बाल्य-कौमार-यौवनरूपाः, दशाः–अवस्थाः, येषां तान् देवानित्यर्थः । अयष्ट—तन्निमित्तं वह्नावाजुहाव । पितॄन्—स्वर्गतान् पूर्वजान्, अतार्प्सीः--श्राद्धादिभिस्तर्पयामास बन्धून्—सुहृदः, सममंस्त-सम्यक् आदद्रे । षड्वर्गम्—कामक्रोधाद्यन्तःशत्रुसमुदायम् , व्यजेष्ट—जितेन्द्रियतया अभ्यभूत्, ( विपराभ्यांजेः, इत्यात्मनेपदम् । ) नीतौ—नयशास्त्रे, अरंस्त—रुचि बुभुजे, अरीन् समूलघातम्—निःशेषम् , ( समूलाकृतजीवेषु हन् कृञ ग्रह इति णमुल ) न्यवधीत्—व्यापादयामास । अत्र 'ध्यै' 'ष्ट' 'प्सी'—प्रभृतीनि कियन्ति पदानि कर्णोद्वेजकानीति वाक्यगतम् ।

पदांशगतं प्रदर्शयति—तद्गच्छेति—। कुमारसम्भवे मदनं प्रति इन्द्रस्येयमुक्तिः । तत्—तस्मात् तव अमितपराक्रमत्वात्, सिद्ध्यै—कार्यसम्पादनाय, इतो व्रज । देवकार्य्यम्—शिवध्यानभङ्गे ब्रह्मणादिष्टं

गौरीपरिणयरूपकृत्यम्, विधेहि। अत्र ‘सिद्धयै’ इति पदे ‘ध्यै’ इत्येतावन्मात्रस्य श्रुतिकटुतया पदांशगतम्।

दुःश्रवत्वादयः कियत्सु स्थलेषु उपकारकतया अनित्यदोषाः प्रतिपाद्यन्ते। एकान्ततो रसापकर्षत्वं नित्यदोषत्वमिति स्वीकारात्। तदुक्तम्— वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते। रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्।’

अनुचितार्थं पदगतं यथा—

“तपस्विभि र्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिष्यते या।
प्रयान्ति तामाशु गतिं यशस्विनो
रणाश्वमेधे पशुतामुपागताः॥”

वाक्यगतन्तूह्यम्।

अनुचितार्थत्वमिति—अनुचितः—अयुक्तः, विवक्षितार्थविरुद्धः इति यावत् अर्थो यस्मिन् तत्त्वम्। तपस्विभिरिति—। या गतिः, तपस्विभिः सुचिरेण—नतु अल्पसमयेन बहुतपस्ययेति भावः, लभ्यते—प्राप्यते। सत्रिभिः—याज्ञिकैः, प्रयत्नतः—भूयसा आयासेन, इष्यते—अभिलष्यते (न तु उपागम्यते इति रहस्यम्) तामेव गतिम्—पदवीम्, यशस्विनः—वीरतया कीर्तिशालिनः, रणाश्वमेधे—युद्धरूपे अश्वमेधाख्ययज्ञे, पशुताम्—वलिजन्तुताम्, उपागताः—प्राप्ताः, पशवो भवन्त इत्यर्थः। आशु—झटिति, प्रयान्ति—प्राप्नुवन्ति। अत्र वीरतायां प्रतिपाद्यायां पशुपदम्—अविशेषेण पश्यतीति पशुः—तन्मूढार्थकं परतन्त्रतादिकातर्य-गुणयुक्तं पशुपदं स्वातन्त्र्याय प्राणान् सुखमर्पयतां वीराणां कातर्यमेव दुर्गुणत्वमेव अनुचितार्थं सूचयति। इदं सकृद्दुष्टतया पदगतम्। यत्र च ईदृशानि अनेकानि दुष्टपदानि सन्ति तद्वाक्यगतम्।

ग्राम्यत्वं—केवल लोके एव स्थितत्वम् । पदगतं यथा—

"किं रुषा शोणितस्पर्द्धी गल्लस्ते स्पन्दते भृशम् ।"

वाक्यगतं यथा—

"ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥"

प्रथमे गल्लशब्दः, द्वितीये भल्लादयश्च शब्दाः ग्राम्याः ।

केवलं लोके—साधारणजनव्यवहारमात्रे नतु चमत्कारिणि काव्ये इत्यर्थः । स्थितत्वम्—तन्मात्रपर्यवसायित्वम्, ग्राम्यत्वम् । अर्थात् विदग्धनागरिकजनप्रयुक्तत्वविरहेण मुग्ध-वैदग्ध्यानभिज्ञ-ग्राम्यजनप्रयोगवत्त्वम् । अत्र वैदग्ध्याभाव एव दूषकता बीजम् ।

पदगतमुदाहरति—किमिति । रुषा—कोपेन, शोणितस्पर्द्धी—अतिरक्ततया रुधिरोपमः, ते तव 'गल्लः'—कपोलः, स्पन्दते—स्फुरति । कपोलादिशब्द एव काव्ये प्रयोज्यः किन्तु अत्र 'गल्लेति—मूढप्रयोज्यः शब्दः अनागरिकतां व्यनक्ति । वाक्यगतं प्रदर्शयति—ताम्बलेति । अयं प्रत्यक्षं दृश्यमानः, मानुषः, ताम्बूलेन—पर्णवीटिकया, भृतः पूर्णः, गल्लः—कपोलः, यस्य सः, भल्लम्—समुचितम्, जल्पति । तु-किन्तु, सदैव यथा तथा—स्थानाद्यविचार्यैव खादनं पानं करोति । अत्र 'गल्ल—भल्ल खादन'—प्रभृतीनि पदानि विदग्धमुखविकारीणि काव्यप्रयुक्तानि वाक्यगतं ग्राम्यं प्रथयन्ति ।

इदं क्वचिद्गुणोऽपि यदुक्तम्—'ग्राम्यत्वमधमोक्तिषु'—गुण इत्यर्थः ।

निहतार्थत्वम्—उभयार्थकस्य शब्दस्य अप्रासिद्धेऽर्थे प्रयोगः ।
यथा—'यमुना शम्बरमम्बरं व्यतानीत् ।'

शम्बरशब्दो दैत्यविशेषे प्रसिद्धः, इह तु जले निहितार्थः ।

निहतार्थत्वम्—निहतः—प्रसिद्धार्थेन विघ्नितः, अप्रसिद्ध इति यावत्, अर्थः—विवक्षितं वस्तु, यत्र तत्त्वम्। अत्र विवक्षितार्थाऽनवबोध एव दूषकता बीजम्। यथा—यमुनेति। नीलवर्णतया आकाशसाम्यमुपगतस्य यमुनाजलस्य वर्णनम्। यमुनायाः शम्बरम्—जलम्, अम्बरम्—गगनम्, व्यतानीत्—वितस्तार। 'शम्बरं सलिले पुंसि मृगदैत्यविशेषयोः।' इति मेदिनी। अत्र शम्बरशब्दस्य कामहतदैत्ये एव प्रसिद्धतया जलार्थवाचकता अप्रसिद्धा। किन्तु श्लेषादौ अस्य दोषाभावः। यथा—"स्याततामदोषौ श्लेषादौ निहतार्थाप्रयुक्तयोः।"

क्लिष्टत्वम्—अर्थप्रतीते र्व्यवाहितत्वम्। पदगतं यथा—

"क्षीरोदजा–वसति–जन्मभुवः प्रसन्नाः।"

अत्र क्षीरोदजा–लक्ष्मीः, तस्या वसतिः—पद्मं, तस्य जन्मभुवः जलानि' इत्यतिकष्टेन बोधः।

वाक्यगतं यथा—

"धमिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः।
रज्यत्यपूर्वबन्धव्युत्पत्ते र्मानसं शोभाम्॥"

अत्र धमिल्लस्य—केशबन्धस्य, शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धः क्लिष्टः।

क्लिष्टत्वमिति—अर्थस्य—इष्टस्य पदार्थस्य, प्रतीतेः—बोधस्य, व्यवहितत्वम्। बिलम्बितत्वम् अत्र पदार्थबोधविलम्बेन वाचयितु र्विमनस्कता दूषकतामूलम्। निहितार्थत्वे विवक्षितार्थस्य सर्वथाऽनवगमः, इह तु तस्य बिलम्बेनावगमः, इति भूयान् भेदः।

क्षीरोदेति—अत्र वृत्तिप्रदर्शितदिशा 'पयांसि प्रसन्नानि—इत्येतावति वक्तव्ये अनल्पशब्दयोजनया अर्थप्रतीतौ क्लिष्टताऽऽगता। समासगतत्वेन पदगतं समुदाहृत्य वाक्यगतं ब्रवीति—कुरङ्गशावाक्ष्याः—

बालहरिणनयनायाः, सुन्दर्य्याः, अपूर्वा—विशिष्टा, बन्धस्य—केश-रचनायाः, व्युत्पत्तिः—कुशलता, यत्र तस्य धम्मिल्लस्य—संयतकेशराशेः, शोभां प्रेक्ष्य कस्य जनस्य मानसं न रज्यति नानुरक्तं भवति ? अपि तु सर्वस्य। अत्र कस्य मानसं, धम्मिल्लस्य शोभाम्, इति व्यवहितपदा-न्वयस्य विलम्बेनावगत्या वाक्ये क्लिष्टत्वमागतम्। अत्र समासगत एव पददोषः। असमस्तपदानां वाक्यान्वययोजनायामेव क्लिष्टत्वानुभवात्। एवं विरुद्धमतिकारित्वविधेयाविमर्शयोश्चावगन्तव्यम्।

अप्रतीतत्वम्—एकदेशेशास्त्रान्तरमात्रे प्रसिद्धत्वम्। यथा—'योगेन दलिताशयः' अत्र आशय शब्दो वासनार्थो योगशास्त्रे एव प्रसिद्धः।

प्रतीतः—प्रसिद्धः, तदन्यथात्वम्। एकदेशे—एकत्र प्रान्ते, शास्त्रा-न्तरे—शास्त्रविशेषे, एव प्रसिद्धत्वम्—परिचितत्वम्। तत्तया देशान्तर शास्त्रान्तरमात्राऽभिज्ञानामप्रतीतत्वम् बोधाविषयत्वम्। इदमेवात्र दूषकता निदानम्। उदाहरणं यथा—योगेन तदाख्यविद्यया, दलितः—दूरीकृतः, आशयः—वासना, मिथ्याज्ञानजन्यः संस्कारविशेषो यस्य सः। अत्र आशयशब्दस्य वासनेत्यर्थः, "क्लेशकर्म-विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति सिद्धान्तिते योगशास्त्रे एव प्रसिद्धः, अन्यत्र अभिप्रायोऽर्थः। अतस्तच्छास्त्रानभिज्ञानामप्रतीतः, अतः सर्वसामान्य-वाचनीयेकाव्ये परित्याज्यः। यत्र तु वक्तृबोद्धव्यौ सङ्केताभिज्ञौ तत्र गुण एव। तदुक्तम्—" गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः।

विरुद्धमतिकारिता यथा—

"उदारचरितो धीमान् सर्वलोक प्रियङ्करः।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे॥"

अत्र कार्यं विना मित्रमिति विवक्षितम्, अकार्येषु मित्रमिति विरुद्धा प्रतीतिः।

विरुद्धमतिकारिता । विरुद्धां—विवक्षितात् प्रतिकूलाम्, मतिं—बोधम्, कर्तुं शीलं यस्य तस्य भावः । उदाहरति—उदारेति । उदारचरितः—विशालाशयः, धीमान्—मतिमान्, सर्वलोकस्य—जनसामान्यस्य 'प्रियङ्करः—इष्टसम्पादकः, एकः—जनान्तरविशिष्टः, असौ अकार्यम्—अप्रयोजनम्, स्वाभाविकमित्यर्थः मित्रम्, तस्य किं वर्णयामहे—गुणं किंविब्रुणुमः इत्यर्थः । अत्र 'अकार्यं मित्रं ननु कार्य्यं वाचनिकमेव, इति विरुद्धामेव मतिमुदपादयत् इति दोषः ।

विधेयाविमर्शदोषं प्रस्तौति—

अविमृष्टः—प्राधान्येनानिर्दिष्टः, विधेयांशो यत्र तस्य भावः अविमृष्टविधेयांशभावः, अयं विधेयाविमर्श इति च कथ्यते ।

यथा—

"वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि ! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ॥"

( कुमारसम्भवम् )

अत्र अलक्ष्यं विधेये तस्य च समासे गुणीभावादप्राधान्येन निर्देशः । यथा वा—

"अमुक्ता भवता नाथ, मुहूर्तमपि सा पुरा ।"

अत्र नञो विधेयत्वमेवोचितम् यथा निम्न श्लोके—

"नव जलधर सन्नद्धोऽयं, न दृप्त निशाचरः,
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम् ।

अयमपि पटुधाराधारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥"

( विक्रमोर्वशीयम् )

"जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥"

इत्यत्र तु अत्रस्तताद्यनुवादेनात्मगोपनाद्येव विधेयमिति न दोषः ।

वाक्ये उद्देश्य—विधेययोरावश्यकी अवस्थितिः । उद्दिश्यते—यदुद्दिश्य किञ्चिदुच्यते तदुद्देश्यम् । यद्विधीयते तद्विधेयम् । यथा "पिता पूज्यः" अत्र पितरमेवोद्दिश्य पूज्यत्वमुक्तम् अतः पितृपदमुद्देश्यम् । विधीयमानं पूज्यपदं विधेयम् । एवमुद्देश्यविधेययोः परिपाट्या स्थितिः, समासाभावश्च नियमितौ । किन्तु यत्र अवमृष्टः—पौर्वापर्य्योल्लङ्घनेन समस्तीभूतत्वेन च औचित्यमतिक्रान्तः, विधेयांशो यत्र सः । तस्य च विधेयस्य अविमर्शः पूर्वंप्रदर्शितरूपः, यत्र सः विधेयाविमर्शः । इत्यपि नामान्तरम् ।

उदाहरणानि प्रदर्शयति । वपुरिति—

शिवं पतित्वेन कामयमानामुमां प्रति तद्भक्तिं जिज्ञासतो वटुरूपभृतो हरस्योक्तिः । हे बालमृगाक्षि—अयि हरिणशावकलोचने । वरेषु—वरणीय परिणेतृषु, यत् वपुः कुलं धनञ्च मृग्यते—अन्विष्यते कन्याभिभावकैरिति भावः । तद्व्यस्तमपि—समस्तस्य का कथा त्रिषु एकतममपि त्रिलोचने—विषमनेत्रे शिवे, किमस्ति ? नैवेत्यर्थः । तथाहि—वपुः—शरीरम्, विरूपे—भालस्थतृतीयनेत्रतया विकृते, अक्षिणी—नयने, यत्र तादृशम् । प्रधानमेव यदि अङ्गं विकृतं तर्हि अलमेव अन्यत्र गात्रे वपुषो दृष्टिनिक्षेपेणेति भावः । अनन्तर मन्वेषणीयं वसुधनम्, दिगम्बरत्वेन—नग्नतया, निवेदितं—प्रकाशितम् । एतावदपि नास्ति यावता लज्जाऽपि निवारणीया भवेदित्यर्थः । अलक्ष्यम्—अवेद्यं, जन्म यस्य

तस्य भावः । अनिश्चितगोत्रादि इत्यर्थः । पुनरपि ईदृशे वरे अभिनिवेशो महते आश्चर्य्याय ! 'अलक्ष्यजन्मता' अत्र जन्मनः ( उद्देश्यभूतस्य ) अलक्ष्यं विधेयम् । तस्य समासे गुणीभावाद्—विशेषणीभूतत्वात्, उद्देश्याङ्गत्वमापन्नत्वात् इत्यर्थः । मुख्यतया न निर्देशः ।

उदाहरणान्तरं यथा—अमुक्तेति— । हे नाथ ! सा-तन्वी, पुरा—विस्मरणशीलात् इदानीन्तनात् समयात् प्रथमम्, मूहूर्तमपि क्षणमात्रमपीत्यर्थः । अमुक्ता—अवियुक्ता, भवता न विरहिता आसीदित्यर्थः । अत्र सा 'न मुक्ता' इति विधेयौचित्ये पृथक् प्रतिपादनीयस्य नञः समस्तता विधेयप्रतीतिविघातिकेति दोषः ।

ननु तर्हि पुनः विधेयभूतस्य नञः प्रयोगः कीदृशः ? तदेवोदाहरणेन प्रदर्शयति—नवजलेति । उर्वशीवियोगेन क्षणं मनोहरेऽपि वस्तुनि भयमुत्प्रेक्षमाणस्य क्षणं प्रकृतिमास्थितस्य विरहिणः पुरुरवस उक्तिरियम्—अयं सन्नद्धः—प्रत्यक्षं बद्धाडम्बरः, नव जलधरः—प्रावृषेण्यमेघः ( सच ) दृप्तनिशाचरः—मत्तराक्षसः, न । इदं—गगने स्फुटम्, दूराकृष्टम्—बहुलम्बमानम्, सुरधनुः—इन्द्रचापः ( किन्तु ) तस्य—निशाचरस्य, शरासनम्—धनुः, न । अयमपि—भूमौ पतन्, पटुः—प्रगल्भः, धारासारः—वृष्टिप्रपातः, बाणपरम्परा—शरावली, नास्ति । ( इयं ) कनकनिकषवत्—सुवर्णकषणरेखावत्, स्निग्धा—रम्या, विद्युत्—चपला, मम प्रिया-प्रेयसी, उर्वशी तदभिधेया अप्सराः, नास्ति । मया उद्विग्नेन चेतसा यत्कल्पितं तन्नास्ति । अत्र असमस्तं नञ् पदं विधेयं न गुणीभूतम् । अमुक्तेत्यत्र तु न तथा ।

यत्र तु समस्तमपि नञ् पदमुद्देश्याङ्गभूतं तत्र विधेयान्तरस्य सत्त्वेन न दोषः । तथा हि-जुगोपेति— । दिलीपं वर्णयतः कालिदासस्य पद्यमिदम् । सः—दिलीपः, अत्रस्तः—भयरहितः सन् आत्मानं जुगोप—ररक्ष । अनातुरः—अक्लान्तः सन् धर्मम्—पुण्यम्, भेजे—सिषेवे, अगृध्नुः—निर्लोभः सन्, अर्थान्—द्रव्याणि, आददे—जग्राह, असक्तः—

निःस्पृहः सन् सुखं—विषयानन्दम्, अन्वभूत् । दिलीपस्य विशेषणीभूतेषु अत्रस्ततादिषु नञ् पदमनुवाद्यम्, इह विधेयन्तु जुगोपादि क्रियापदमेव । अतो नात्र दोषः ।

इदं समासगतपददोषस्य उदाहरणं, पुरतः पौर्वापर्य्यव्यतिक्रमरूपं वाक्यगतं विधेयाविमर्शं लक्षयति—

वाक्यगतो यथा—

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभि र्भुजैः ॥"

(महानाटकम्)

'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्' इत्युक्तेरुद्देश्यस्य प्रथमं, ततो विधेयस्य निर्देशो युक्तः । अत्र न्यक्कारस्य विधेयत्वे विवक्षितेऽपि प्रथमं निर्देशात् न तथा प्रतीतिः । रचना च पदद्वयस्य विपरीतेति वाक्यदोषः । यथा वा—

"आनन्दयति ते नेत्रे योऽसौ सुभ्रु ! समागतः ।"

अत्र असौ इत्यस्य विधेयत्वमेव भवितुं युक्तः, तच्च यच्छब्दनिकटस्थतया अनुवाद्यत्वप्रतीतिकृत् ।

लङ्कामाक्रम्य राक्षसकुलं विनाशयति रामचन्द्रे रावणस्य निर्वेदविषयिणी उक्तिरियम्—न्यक्कारेति— । प्रथमतः यद् अरयः—शत्रवः (न तु एको द्वौ वा किन्तु बहवः, इति वचनव्यङ्ग्यम्) अयमेव मे—मम, न्यक्कारः—तिरस्कारः ! तत्रापि—अरिष्वपि असौ—समीपे

वर्तमानः ! तापसः—भिक्षुकः ! सोऽपि—क्षुद्रशत्रुरपि, अत्रैव—समक्षमेव नत्वन्यत्र, समक्षे क्षुद्रशत्रुकृतस्तिरस्कारो मादृशो वीरस्य नितरां दुःसहः ! राक्षसानां कुलं—समुदायम्, न तु त्रिचतुरान् राक्षसान्, निहन्ति—निःशेषेण विनाशयति ! अहो ! महत्कष्टमिदम् ! रावणः—रावयति—जनान् आक्रन्दितान् विधत्ते इति रावणः ! दुःखं सर्वमनुभवन्निति भावः । जीवति—प्राणिति !!! व्यसनात् पूर्वमेव निधनं वीराणां सुखकरमिति भावः । शक्रजितम्—सुरेन्द्रविजयिनम्, मेघनादं धिक् धिक् पुनः पुनः धिगस्तु । प्रकर्षेण बोधितवता—उत्थाप्य निवेदितेन, कुम्भकर्णेन किम् ? किमपि नेत्यर्थः । स्वर्गग्रामटिकायाः—स्वर्गरूपसाधारणपुटभेदनस्य, विलुण्ठनेन वृथोच्छूनैः—व्यर्थपुष्टैः, एभिः दशभिः कैलासोत्थापनसमर्थैरिति भावः । किम् ? किं प्रयोजनं सिद्धम् ? न किमपीत्यर्थः । पुरो भिक्षुकसदृशो निजकुलं विनाशयतो रिपोर्हरो यदि न विदारितं प्राक् प्रदर्शिताद्भुतशौर्य्यानपि अस्मान् मुहु र्मुहु धिक् ! शार्दूलविक्रीडितं वृत्तम् । प्रतिपदं ध्वनिः । महानाटकस्यैका सूक्तिरियम् । अत्र अनुवाद्यम्—उद्देश्यम्, अनुक्त्वैव—अनुच्चार्य्यैव, विधेयं न उदीरयेत्—न प्रतिपादयेत् । पितुः पूज्यत्वे विधेये 'पिता पूज्यः' एवंविधं परिपाट्या स्थापनीयम्, इदमेव चेत् 'पूज्यः पिता—' एव विद्येत पूज्यपदं पितरि उद्देश्ये विशेषणीभूतं सत् 'आगतो गतो वा' एवं विधं विधेयमाकांक्षते । अतोऽनेन नियमेन अत्र 'अयम्' इति उद्देश्यपदस्य प्रथमं तदुत्तरं 'न्यक्कारः' इति विधेयस्य प्रतिपादनं युक्तम् । तदिह समुल्लङ्घितमिति न्यक्कारस्य विधेयत्वे अपहृते पदद्वयस्य स्थापनायां विपरीततया वाक्यदोषः । श्लोकान्तिमे पदे उच्छूनतायाः वृथात्वरूपविधेयस्य समासे गुणीभावात् पदगतोऽपि विधेयाविमर्शः एकाधिकदोषसद्भावेन वाक्यदोषमेव पुष्णाति ।

उदाहरणान्तरं यथा—यः—प्रियः, ते—तव, नेत्रे—नयने, दर्शनेनेतिभावः । आनन्दयति—शिशिरयति, असौ आगतः—उपस्थितः । अत्र 'योऽसौ' इत्येकत्र स्थितयोः पदयोः 'यः कश्चित्' इत्यर्थकत्वे अनुवाद्य-

प्रतीति कारिणः 'असौ' इत्यस्य व्यवधानेन प्रतिपादनं युज्यते । अन्यथा विधेयत्वं तस्य विनष्टमिति ज्ञेयम् ।

सन्दिग्धत्वं यथा—

"आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ।"

अत्र वन्द्यामिति वन्दीभूतायामुत वन्दनीयायामिति सन्देहः ।

सन्दिग्धत्वम्—उभयकोटिकपदार्थग्रहणाभावेन विवक्षितनिश्चयाभाववत्त्वम् । यथा—आशीरिति । आशीःपरम्पराम्—शुभाशंसिवचनसमुदायम्, कर्णे कृत्वा वन्द्यां कृपां कुरु—दयस्व । बवयोरभेदेन वन्द्यामत्र अन्तःस्थीयं वकारं शङ्कमानस्य वन्दीभूतायामिति सन्देहः । उदितोक्तं विवेचयतः बन्दीभूतायां—कारागृहीतायामिति सन्देहोत्पादनेन प्रकृतिभूतं विवक्षितं न प्रतीयते । अस्य गुणत्वमपि यथा—"सन्दिग्धत्वं गुणो व्याजस्तुतिपर्यवसायि चेत् ।"

पदवाक्यगतसामान्यदोषान्प्रतिपाद्य केवलवाक्यगतानुदाहरति—

"वर्णानां प्रतिकूलत्वं सन्धौ विश्लेषकष्टते ।
अधिकन्यूनकथितपदताऽक्रमता तथा ॥
भग्नप्रक्रमता ख्यातिहतता सङ्करोऽपि च ।
गर्भितत्वं तथा काव्ये दोषाः स्युर्वाक्यमात्रगाः ॥"

काव्ये एते कारिकोदीरिता दोषाः—कवित्वाऽपकर्षकाः; वाक्यमात्रगाः केवलं वाक्ये वर्तमानाः, स्युः । पदे एकद्विविपरीतवर्णसद्भावेनाऽपि रसप्रतिकूलता न भवति किन्तु असकृत् प्रतिकूलवर्णस्थापनेनैव दोषत्वमुत्पद्यते । एवं सकृदेव सन्धेः विश्लेषेण कष्टतया च न दोषः । असकृत् दुष्टपदसद्भावेन तु वाक्यदोषस्यैव प्रतिपादनात् । यद्यपि लुप्ताहतविसर्गतादिभेदेन अधिकप्रकाराः किन्तु प्रधानीभूता एते एव सन्ति वाक्यदोषाः । नामानि यथा—वर्णप्रतिकूलत्वम्, सन्धिविश्लेषः, सन्धि-

कष्टता, अधिकपदता, न्यूनपदता, कथितपदता, अक्रमता, भग्नप्रक्रमता, ख्यातिहतता, सङ्करः, गर्भितत्वम् । एते एकादश सन्ति ।

वर्णप्रतिकूलतां वर्णयति—

वर्णानां रसानुगुणत्वं वक्ष्यते, तद्वैपरीत्यं प्रतिकूलत्वम् । यथा—'कृतमनुमतम्' इति पूर्वमुक्तम् । अत्र हि गाढबन्धत्वं दीर्घ-समासत्वं च उचितम् । तद्वैपरीत्यकरणाद्दोषः ।

वर्णानां रसस्य—शृङ्गारादेः, 'मूर्ध्नि वर्गान्त्यवर्णेन'—इति गुणविचार-प्रस्तावे प्रदर्शितदिशा उपकारित्वम् उपपद्यते । तदतिरिच्य शृङ्गारादौ टवर्गरेफयुक्तषकारादीनाम्, एवं रौद्रादौ 'मध' प्रभृति मञ्जुवर्णानां विपरीततया प्रयोगेण 'ताम्बूलं याचमानाय दुग्धप्रदानम्, दुग्धं प्रार्थय-मानाय तिन्तडीकदानमिव वर्णप्रतिकूलत्वं दोषः । उदाहरणं यथा 'कृतमनुचितं दृष्टं वा यैरिदं गुरुपातकम्,' । (३ परिच्छेदे रौद्ररसोदाहरणे) रौद्ररसे तदनुकूलं गाढबन्धत्वं—परुषवर्णयोगेन बन्धवैकट्यं दीर्घ-समासत्वञ्च युक्तम् । किन्त्वत्र शृङ्गारकरुणोचितं मृदुरचनाऽसमास-विरल-समासादि प्रदर्शितमतो दुष्टमिदं पद्यम् ।

पूर्वोत्तरवर्णानां यथाशास्त्रं मेलनं सन्धिः । तद्गतं दोषमाह—

सन्धौ विश्लेषः द्विविधः । व्याकरणलक्षणानुसारेण कृतः, स्वेच्छया कृतश्च । पूर्वः असकृदेव दोषः, द्वितीयस्तु सकृदपि । आद्यो यथा—

"दलिते उत्पले एते आक्षिणी अमलाङ्गि ते ।"

द्वितीयो यथा—

"वासवाशामुखे भाति इन्दुश्चन्दनबिन्दुवत् ।"

सन्धौ कष्टता—श्रुतिदुःखावहत्वम् । यथा—

"उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक्॥"

सन्धिविश्लेषः – पृथक्स्थितवर्णानामेकत्र विन्यासस्याभावः। स च द्विप्रकारः—व्याकरणलक्षणाऽनुसारी प्रगृह्यसंज्ञादिप्रदर्शितदिशा, स्वेच्छया कृतः—शास्त्रमुल्लङ्घ्य सन्धित्यागश्च; पूर्वः—शास्त्रानुसारी, असकृदेव मुहुर्मुहुं नैकवारं कृत एव दोषाय भवति अन्यथा शास्त्रारम्भ एव व्यर्थः स्यात्। अपरः—स्वेच्छाकृतः, सकृदपि—एकधाऽपि प्रयुक्तः शास्त्रोल्लङ्घनेन व्यवस्थाभङ्गदोषाद्दोषावहः। प्रथमस्य उदाहरणं दलितेति। हे अमलाङ्गि! सुन्दरि! ते—तव, एते—पुरो दृश्यमाने, अक्षिणी—नयने, दलिते—विकस्वरदले, उत्पले—कमले, स्तः। अत्र 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति शासनमनुसृत्य कृतोऽसन्धिः बहुधा प्रयुक्तः सहृदय-मुखमुद्रणाय भवतीति दोषः। द्वितीयस्य यथा,—वासवेति। इन्दुः—चन्द्रमाः, वासवाशायाः—पूर्वदिशायाः, मुखे—प्रारम्भे, चन्दनबिन्दुवत् भाति—शोभते। 'भाति + इन्दुः' इह दीर्घेण भाव्यम्। तत् एकधाऽपि अनुशासनमुल्लङ्घितमिति दोषाय जातम्।

सन्धिक्लिष्टता—श्रुतिदुःखजनकक्रियमाणसन्धिभावः। उर्व्यसाविति। अत्र मरोः—निर्जलप्रान्तस्य, अन्ते—अवसाने, उर्वी—विशाला, चारुः—मनोज्ञा, अवस्थितिः—स्थानक्रमः, यस्याः सा, असौ तरूणां—वृक्षाणाम्, आली—पङ्क्तिः, ऋजु—अनायासं यथा तथा, गन्तुम्—प्रवेष्टुम्, न युज्यते, अतः शिरो नमय। 'उर्व्यसौ' 'तर्वाली' 'मर्वन्ते'—प्रभृतिसन्धयः कर्णयोः कटुतया वाचकेभ्यः कष्टं जनयन्ति। सन्धि-मूलकतया एतस्य श्रुतिकटुत्वाद्भेदः।

अधिकपदता यथा—"सदा शिवं नौमि पिनाकपाणिम्"—इत्यत्र 'पिनाकपाणिम्' इति विशेषणमाधिकम्।

"कुर्यां हरस्याऽपि पिनाकपाणेः" इत्यत्र तु अतिदुष्प्रधृष्य सूचनाय 'पिनाकपाणेः' इति विशेषणं युक्तमेव।

न्यूनपदता यथा—"तथाभूतां दृष्ट्वा—" इत्यादौ पूर्वमुक्ते। अत्र 'अस्माभिः' इति, 'खिन्ने' इत्यस्मात् पूर्वम् 'इत्थम्' इति च पदं न्यूनम्।

कथितपदत्वं यथा—

"प्रियं चेत् भरतस्यैतत् रामप्रव्राजनं भवेत्।
मास्म मे भरतः कार्षीत् प्रेतकृत्यं कदाचन॥"

अत्र भरत इति पुनः कथितं, सर्वनाम्नैव अस्य परामर्शो युक्तः। 'मास्म मेऽसौ सुतः' इत्यदुष्टम्।

अधिकपदता,—अधिकानि—अनुपयुक्तानि बहुलानि, पदानि (प्रयुक्तानि) यत्र तस्य भावः। यथा—'सदाशिवमिति। अत्र नमस्करणीये सदाशिवे केवलं छन्दःपूर्तिजननाय निबद्धं 'पिनाकपाणि' पदं नितरामनुक्तं निबन्धयितु र्भावदारिद्र्यमेव दूषकताबीजं जनयति। यत्र तु प्रकृतमुपकुरुते तत्र एवंविधं विशेषणादि न दोषाय। यथा—"तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा। कुर्यां हरस्यापि पिनाकपाणेः धैर्यच्युतिं के मम धन्विनोऽन्ये॥" इत्यात्मनः प्रभुत्वमिन्द्राय निवेदयतो मदनस्योक्तौ लघुसहायकत्वेऽपि निजमहत्वसूचनाय 'कुसुमायुधः' इतीव शिवस्यातिदुर्दमनीयतायाः प्रतिपादनाय पिनाकः तदाख्योऽस्त्रविशेषो पाणौ यस्य तम्—'पिनाकपाणिम्' इति नितरामुपयुक्तं न दोषाय। प्रत्युत परिकरालङ्कारः साभिप्रायविशेषणत्वात्। "सम्भ्रमे विस्मये हर्षे विषादेऽप्यधिकं पदम्।" इत्युक्तेः अधिकपदस्यापि स्थाने गुणावहत्वम्।

न्यूनपदता,—न्यूनम्—अनुक्तविवक्षितार्थं, पदं यत्र तस्य भावः। उपयुक्तपदत्यागः। उदाहरति—'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतन-

याम्—' द्वितीयपरिच्छेदे काकोरुदाहरणे पठितेऽस्मिन्पद्ये 'उषितम्' इति क्रियापदस्य किंकर्तृकस्येत्याकांक्षापूर्तये भृशमुपयुक्तम् 'अस्माभिः' इति पदम्, एवं खेदं खिन्ने अत्र पूर्वोक्तवनवासादिघटनान्वयसिद्धये 'इत्थं' पदं युक्तमपि परिहृतमिति न्यूनपदता। न्यूनपदताया गुणावहता उक्ता यथा—"उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः ।"

कथितपदत्वं—प्रयुक्तपदस्य पुनः प्रयोगो यत्र तत्त्वम् । अधिकपदत्वे अप्रयुक्तस्य पदस्य प्रयोजनशून्यः प्रयोगः, इह तु प्रयुक्तस्य पुनः पदान्तराभिधानौचित्ये तत्पदेनैवोक्तिः दुष्टा, इति द्वयोः प्रचुरो भेदः । उदाहरति—प्रियमिति । दशरथस्योक्तिः । रामप्रव्राजनम्—रामवनवासः, चेत्—(सम्भावनायाम्) भरतस्य प्रियम्—मनोऽनुकूलम् ? तदा कदाचन—कदापि मे—मम (रामवियोगेन निश्चितमरणस्येत्यर्थः) प्रेतकृत्यम्—दाहादि, भरतः मा कार्षीत्—नैव कुर्यात् (माङिलुङ्) अत्र 'भरतस्य' 'भरतः' इति पुनर्वचनं सर्वनाम्ना (पुनर्वचनपरिहारप्रयोजकेन) 'मा स्म मेऽसौ सुतः' इत्यादि प्रकारेण परिहरणीयम् । तथा तु न कृतमिति कथितपदत्वं दोषः । "विहितस्यानुवाद्यत्वे स्यादुक्तपदता गुणः"

अक्रमत्वम्—अविद्यमानः क्रमः—पदास्थितिक्रमो यत्र तत् अक्रमम्, तस्य भावः । यथा—

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥
(कुमारसम्भवम्)

भग्नप्रक्रमता—भग्नः प्रक्रमः—उद्देशानुगुणः प्रस्तावो यस्मिन् तत् भग्नप्रक्रमं तस्य भावः । यथा—

यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः ॥
( किराता० )

अत्र 'सुखलिप्सया वा' इत्यत्र 'सुखमीहितुं वा' इति तुमन्तप्रयोग एव युक्तः ।

अक्रमत्वम्—न विद्यते क्रमः—उचितपदात् पूर्वं परं वा स्थिति र्यस्य तस्य भावः । यत्पदोत्तरं यस्य पदस्य निवेशो युक्तः तस्य अन्यत्र स्थापनं—क्रमराहित्यम् दोषाय भवति । यथा—द्वयमिति । तपस्यन्तीं पार्वतीं परीक्षमाणस्य बटुरूपधारिणः शिवस्योक्तिः । पिनाकिनः—रुद्रस्य, समागमस्य—सङ्गतेः, प्रार्थनया—आकांक्षया, कलावतः—चन्द्रमसः, सा—भुवनविदिता, कान्तिमती—प्रभापूर्णा, कला—षोडशांशः, शिवमूर्द्धनि स्थिता इत्यर्थः । अस्य लोकस्य नेत्रकौमुदी-चन्द्रिकावत् नयनाह्लादिनी, त्वञ्च इदं द्वयं सम्प्रति—पूर्वमेकैव शोचनीया अधुना त्वत्सङ्गादिति भावः । द्वयमपि शोचनीयताम्—जनैश्चिन्तनीयतां गतम् । शिवाङ्गोचिता यथा चन्द्रकला नास्ति तथा त्वमपि नासि, अतः वरान्तरं वृणुष्व इत्याशयः । 'अस्य लोकस्य च' अत्र चकारः लोकस्यैव समुच्चयं बोधयति, इह समुच्चेयं पदं तु 'त्वमिति' अतः चकारस्तत्रैव स्थापनीयः । इह तु तत्क्रमः परिहृतः ।

भग्नप्रक्रमता—उद्दिष्टरीतिक्रमत्यागः, वाग्धारायाः येन पथा प्रवाहश्चलितः, तमतिरिच्य धृतः पन्थाः भग्नप्रक्रमताजननाय । उदाहरति—यश इति । द्वैतवने युधिष्ठिरादीन् शान्त्वयतो व्यासस्योक्तिः । यशः—कीर्तिम्, अधिगन्तुम्—लब्धुम्, सुखलिप्सया—आनन्दकामनया, मनुष्यसङ्ख्याम्—मनुजगणनाम्, अतिवर्तितुम्—अतिक्रान्तुम्, लोकोत्तरो

भवितुमित्यर्थः । निरुत्सुकानाम् — आवेगरहितानाम् , अभियोगभाजाम् — उद्योगं प्रयुञ्जानानाम्, समुत्सुका इव — स्वयमुत्कण्ठिता इव, लक्ष्मीः — सम्पत्, अङ्कमुपैति — समीपमुपसर्पति । अत्र 'अधिगन्तुम्' इत्यादि तुमुन्प्रत्ययान्तप्रवाहे 'सुखलिप्सया' इति समस्तसन्नन्तप्रयोगः पाषाणस्तूप इव पतितः भग्नप्रक्रमतासलिलोद्रेकैर्वाचकान् क्लेदयामास । 'सुखमीहितुम्' इत्येवं प्रयोगौचित्येऽक्रियमाणे भग्नप्रक्रमत्वम् , अक्रमत्वे केवल उचितपदानन्तरं निवेशक्रमत्यागः । इह तु प्रयोगरीतित्यागः, इति स्फुटो भेदः ।

ख्यातिहतता—प्रसिद्धित्यागः । मेघादीनां गर्जिताद्येव प्रसिद्धं तदन्यथावर्णने ख्यातिहतत्वम् ।

वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्करः । यथा—

"किमिति न पश्यसि कोपं पादगतं बहुगुणमाद्रियस्वैनम् ।
ननु मुञ्च हृदयनाथं सदयं मनसस्तमोरूपम् ॥

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि ? एनं सदयमाद्रियस्व मनसस्तमोरूपं कोपं मुञ्चेत्यन्वयः । एकवाक्यगतत्वे क्लिष्टत्वमित्यस्माद्भेदः ।

वाक्यान्तरे वाक्यान्तरप्रवेशो गर्भितत्वम् यथा—

"परापकारनिरतै दुर्जनैः सह सङ्गतिः ।
कर्तव्यः साधुसंसर्गो न विधेया कदाचन ॥

अत्र तृतीयपादवाक्यं वाक्यान्तरमध्ये प्रविष्टम् ।

ख्यातिविरुद्धतेति । ख्यातिः—सर्वसामान्येषु प्रसिद्धिः, तस्य हतता त्यागः । प्रसिद्धादन्यत्र प्रयोग इति भावः । यथा 'मेघो गर्जति' अत्र स्थाने 'मेघो ब्रूते' इत्यभिधानं मेघस्य गर्जनप्रसिद्धित्यागेन ख्याति-

हतता । आदिपदेन तु—'मञ्जीरादिषु रणितप्रायं पक्षिषु तु कूजितप्रभृति । स्तनित-भणितादि सुरते—मेघादिषुगर्जित प्रमुखम् ॥' एवं भेकस्य रवः, अश्वस्य हेषा, हस्तिनः बृंहितम्, प्रसिद्धं तदन्यथावर्णनम् अप्रकृततया सहृदयवैमुख्यरूपदूषकताबीजं जनयति ॥

सङ्कर इति । सङ्कीर्णानामेकत्र भवनम्, तत्तु वाक्यान्तरस्थपदानां निराकांक्षे वाक्यान्तरे प्रवेशरूपम् । अतो दूरगतप्रकृतार्थतया दुर्बोधतैत्र दोषबीजम् । उदाहरति—किमिति । अनुनयन्तं कान्तमपरिगणयन्तीं कान्तां प्रति वयस्याया उक्तिः । पादगतम्—चरणप्रणतम्, बहुगुणम्—विविधगुणशालिनम्, हृदयनाथम्—प्रेयांसम्, किमिति न पश्यसि ? कथं न वीक्षसे ? एनम्—स्वामिनम्, सदयम्—सस्नेहम्, इत्यर्थः । आद्रियस्व—आश्लेषेण सत्कुरुष्व; मनसस्तमोरूपं कोपं—तामसं क्रोधम्, मुञ्च—जहिहि । 'मुञ्च'—'हृदयनाथं'—'सदयम्'—इत्यादि वाक्यान्तर-सम्बद्धानि पदानि अनाकांक्षिते अपरस्मिन् वाक्ये प्रविष्टानि अन्वयसङ्गतिं व्याघ्नन्तीति सङ्करो दोषः । क्लिष्टत्वेऽप्यन्वयविलम्बः, किन्तु तत्रैकवाक्य घटकः, इह तु अनेकवाक्यघटक इति स्पष्टो भेदः ।

गर्भितत्वम्—गर्भः—वाक्यान्तररूपः, अस्य सञ्जात इति तस्य भावः । अन्तःस्थितवाक्यान्तरत्वमिति भावः । स्फुटान्वयत्वेऽपि असङ्गति-रूपतया वाक्यान्तरस्य वाक्यान्तरे प्रविष्टत्वम् । गर्भितत्वे अन्वयो न स्फुटः, एवं वाक्यान्तरपदस्य न तु वाक्यस्य अन्यस्मिन् वाक्ये प्रवेश इति प्रतीतं पार्थक्यम् । लक्ष्यमुदाहरति—परेति । परापकारेषुअन्यजन-हानिषु, निरतैः—तत्परैः, दुर्जनैः सह सङ्गतिः, कदाचन न विधेया । साधुसंसर्गः—सज्जनसङ्गतिः, कर्तव्यः । अत्र अपूर्णे 'दुर्जनैः सह सङ्गति-र्नविधेया' इति वाक्ये 'साधुसंसर्गः कर्तव्यः' इति तृतीयपादस्थं वाक्यं 'द्वयोस्तृतीयं' जातम् । अतो गर्भीकृतवाक्यान्तरतया गर्भितत्वं दोषः । मूलवस्तुनः आसत्ते विलम्ब एव दोषमूलम् । इदं गुणत्वमपि प्राप्नोति यथा—हरिः—यो ग्राहाद्गजं मोचयामास—त्वां नूनमुद्धरि-ष्यति इति ।

एवं पद-पदांश-वाक्य-गतत्वेन त्रैविध्यमुपगतान् शाब्दान् दोषान् निरूप्य आर्थान् प्रपञ्चयति—

"दुष्क्रम-ग्राम्य-कष्टत्वं व्याहतत्वमहेतुता ।
अनवीकृतता पौनरुक्तयं ख्यातिविरुद्धता ॥
अनुवादो विधेश्चैवमर्थदोषाः प्रकीर्तिताः ॥"

दुष्क्रमता—दुः—दुष्टः, विरुद्ध इति यावत् क्रमः—वचनक्रमो यस्मिन् स दुष्क्रमः । यथा वसन्तादिवर्णने प्रथमं प्रवालोद्गमस्य, ततः कुसुमोत्पत्तेरनन्तरं पुष्पेषु शिलीमुखानाम् आपतनामिति यथाक्रममेवैतेषामाविष्करणमुचितम्, विशिष्टहेतुं विना ततोऽन्यथा वर्णने दुष्क्रमता दोषः । एवमन्यत्रापि ।

ग्राम्यत्वं यथा—

"ताम्रभृङ्गारतुल्योऽयमर्को मज्जति वारिधौ ॥"

दुष्क्रमेति । द्वन्द्वान्ते श्रूयमाणं 'त्व' मिति प्रत्येकमन्वेति । दुष्क्रमत्वम्—प्रसिद्धक्रमत्यागः, ग्राम्यत्वम्—नागरिकाऽप्रयोज्यत्वम्, कष्टत्वम्—अर्थावबोधे विलम्बायासाद्यतिशयजनकत्वम्, व्याहतत्वम्—उक्तविरुद्धत्वम्, अहेतुत्वम्—कारणोपादानशून्यकार्यवर्णनत्वम्, अनवीकृतता—नवीनतामन्तरेण उक्तस्य पुनः पुनरुद्दोषः, पौनरुक्तयम्—उक्तस्यार्थस्य पुनरुपादानम्, ख्यातिविरुद्धता—सर्वविदितवर्णनान्यथाभाववत्त्वम्, विध्यनुवादः—विधेयस्य उद्देश्यत्वेनोपादानम् । सम्भवत्स्वपि अपुष्टार्थत्वादिदोषान्तरेषु प्रधानत एते एव दोषा आलङ्कारिकैर्निगदिताः ।

दुष्टः—अनुचितः—लोकशास्त्रविरुद्धः, क्रमः—वर्णनशृङ्खला यत्र तत्त्वम् । वसन्तवर्णनक्रमे वृत्तिप्रदर्शितदिशा समुचितशृङ्खलाभङ्गे एष दोषः, अक्रमत्वं पदान्तरसमभिहारे क्रमविचारशून्यत्वमिति स्फुटो भेदः । उदाहरणं वृत्तौ प्रदर्शितम् । एवं 'लक्ष्मणो रामश्च हनूमता पूजितौ' अत्र

ज्यायसः पश्चात्स्थापनरूपविरुद्धक्रमप्रदर्शनम्— पञ्चदेवतापूजनात्पूर्वं देवान्तरपूजाप्रकल्पनमिव सर्वथा विरुद्धम् । प्रवालोद्गमस्य—पल्लवप्रादुर्भावस्य, शिलीमुखानाम्—भ्रमराणाम्, आविष्करणम्—प्रकाशनम्,—निबन्धनमिति यावत् । सति हेतौ क्रमत्यागो न दोषावहः ।

ग्राम्यत्वम्—अनागरिकप्रयुक्तत्वम् । तदुक्तम्—'स ग्राम्योऽर्थो रिरंसादि पामरै र्यत्र कथ्यते ।' उदाहरति—ताम्रेण—रक्तवर्णेन, भृङ्गारेण गोलाकृतिजलपात्रेण, तुल्यः, अयम् अर्कः—सूर्यः, वारिधौ—सागरे, मज्जति—ब्रुडति । अत्र ताम्रभृङ्गारेण तुल्यता सूर्यस्य नागरिकैः सर्वथा अप्रयुक्ता, ग्राम्यत्वं प्रथयति ।

कष्टत्वम्—अर्थप्रतीते र्व्यवहितत्वम् । यथा—

"सदा मध्ये यासामियममृतनिष्यन्दसरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥"

अत्र यासां कविरुचीनां मध्ये सुकुमार—चित्रमध्यमात्मकत्रिमार्गा भारती चमत्कारं वहति, ता गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत् प्रसन्ना भवन्तु ? इत्येकोऽर्थः । यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति ता मेघपरिचिताः कथं प्रसन्ना भवन्ति ? इति द्वितीयोऽर्थः । अर्थद्वयमपि नितरां दुर्बोधम्; शब्दानां परिवर्तनेऽपि कष्टतायास्तादवस्थ्यादयमर्थदोषः ।

कष्टत्वम्—पदार्थबोधे दुरूहतया क्लेशजनकत्वम् । सम्यक् प्रतीतेरभाव एवात्र दोषबीजम् । अनुकरणादावपि दुरूहतायास्तादवस्थ्येनास्य नित्यदोषत्वम् ।

उदाहरति—सदेति । गभीरभावस्य निजकाव्यस्य दुरूहतारूपदोष-

परिमार्जनाय व्योम्नः साम्यं प्रदर्शयतः कस्यचित्कवेरुक्तिः पुनस्तद्रचनाभ्यस्तं क्लिष्टत्वमेव वृणुते। ( काव्यपक्षे ) पक्षे—अमृतनिष्यन्दा—सुधास्राविणी, ( चासौ ) सरसा—शृङ्गारादिरसोपेता, उद्दामा—उद्धत ( भाव ) प्रवाहा, बहुमार्गा—सकुमार-विचित्र-मध्यमारूपमार्गत्रयप्रसारा, इयं सरस्वती—कविवाणी, यासां रुचीनां कविप्रवृत्तीनां गभीरात्मिकानामिति भावः। परिमलं—चमत्कारम्, वहति। ता एताः घनपरिचिताः-नितरामभ्यस्ताः, स्फुरितमधुराः—विशदीकृतमनोज्ञभावाः, महताम्—कविवराणाम्, रुचयः—गभीरकाव्यरचना—प्रवृत्तयः, महाकाव्यव्योम्नि—आकाशरूपे श्रेष्ठकाव्ये, केन प्रकारेण प्रसादम्—स्फुटत्वम्, स्फुटार्थत्वमिति यावत् यान्तु? नैव कथमपीत्यर्थः। गम्भीरभावानि काव्यानि स्वभावतो दुरूहाणि भवन्त्येवेत्यर्थः। इत्येव श्लिष्टपदैः व्योम्नः साम्यं निरूप्यते। यासाम् रुचीनाम्—आदित्यप्रभाणां मध्ये अमृतनिष्यन्दा—सुधाकल्पसलिलनिष्यन्दिनी ( चासौ ) सरसा—सुपेया, उद्दामा—अवारितगतिः, बहुमार्गा—त्रिमार्गा, परिमलम्—सुराङ्गनाङ्गरागजनितं सौरभम्, वहति। ताः—एताः, स्फुरितमधुराः—प्रकाशेन मनोज्ञाः, घनपरिचिताः—मेघसम्बद्धाः, महताम्—'विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः। धाता विधाता वरुणो मित्रः शक्र उरुक्रमः॥" इत्युक्तानाम् द्वादशादित्यानाम्, रुचयः—प्रभाः, महाकाव्यमिव व्योम—आकाशम्, तस्मिन् कथं प्रसादं—स्वच्छताम्, यान्तु? मेघसङ्गमेन, उद्दाममन्दाकिन्याश्च प्रवाहादिना कथं रुचयः स्वच्छाः भवितुं शक्नुवन्ति। अत्र कविरुचि—सूर्यप्रभयोश्च प्रकृताप्रकृतयोः द्वयोरप्यर्थयो र्बोधो महता कष्टेन भवति। अतोऽत्र मुख्यार्थप्रतीतिविलम्बनरूपो दोषः 'कष्टत्व' नाम्ना व्यवहृतः।

नचाऽयं कठिनशब्दप्रयोगेण जायमानः शाब्दो दोषः, किन्तु शब्दपरिवर्तनेऽपि कष्टतायाः तदवस्थितत्वेन अर्थगतो दोषः। यो हि यदन्वयव्यतिरेकी स तदाश्रयः' इति नियमात्।

कस्यचित्प्रागुत्कर्षमपकर्षं वाऽभिधाय पश्चात्तदन्यथाप्रतिपादनं व्याहतत्वम्। यथा—

" हरन्ति हृदयं यूनां न नवेन्दुकलादयः।
वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका ॥ "

अत्र येषामिन्दुकला नानन्दहेतुः तेषामेवानन्दाय तन्व्यां चन्द्रिकात्वारोपः।

अहेतुता—( निर्हेतुता ) हेतोरवचनम्। यथा—

" गृहीतं येनासीः परपरिभवान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्
विमोक्ष्ये शस्त्र! त्वामहमपि यतः स्वस्ति भवते ॥ "

( वेणीसंहारना० )

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वम्।

**व्याहतत्वम्—प्रतिपादितस्य उत्कर्षस्य पुनरपकर्षप्रतिपादनम्। एवम् अपकर्षस्य पुनरुत्कर्षप्रतिपादनम्। तदुक्तम् प्रदीपे, "उत्कर्षो वाऽपकर्षो वा प्राग्यस्यैव निवेद्यते। तस्यैवाथ तदन्यश्चेद्‌व्याहतोऽर्थस्तदा भवेत् ॥ " तद्यथा—हरन्तीति। तेषां यूनाम्—तरुणानाम्, नवेन्दुकलादयः—नूतनोदितचन्द्रमसो ज्योत्स्नादीनि, हृदयं न हरन्ति — प्रमोदं न पुष्यन्ति, यैः लोकलोचनचन्द्रिका—जननयनानि चन्द्रिकावद् आनन्दयन्ती, इयं तन्वी—सुन्दरी, वीक्ष्यते—दृष्टिपथमवतार्य्यते। अत्र चन्द्रकलासु आनन्दमननुभवतां यूनां पुनः चन्द्रिकात्वमुपगतायां तरुण्यां प्रमोदानुभवं वीक्ष्य 'रविकरक्लिन्नं जनं ग्रीष्माद्रक्षणीयं प्रतिपाद्य पुनरग्निना तापयन्तं वक्तुमिव' को न हसेत्।**

**अहेतुता—आवश्यककारणानुपादानम्। दर्शयति गृहीतमिति। कर्णेन समं विवदमानस्य अश्वत्थाम्नो निजं शस्त्रं प्रति सोल्लुण्ठं वचनम्।**

हे शस्त्र ! ( पूर्वं तातकरधृतेत्यर्थः ) यत् त्वं नोचितमपि—ब्राह्मणस्य शस्त्रधारणनिषेधेन अनुचितमपि परपरिभवात्—द्रुपदादिशत्रुकृतापमानात्, येन—मम पित्रा द्रोणेन, गृहीतम्—स्वीकृतम्, आसीः । यस्य च—पुनः मम पितुः, प्रभावात्—महिम्नः, न कश्चित्—पुरुषः, तव विषयः—गोचरीभूतः, इति नैव । अपि तु विषय एव, द्रोणस्य संसारप्रसिद्धतया दर्शनीयत्वात् । नन्वयं प्रकृतार्थमेव द्रढयति । तेनैव—द्रोणेन, त्वं पुत्रशोकात्—'अश्वत्थामा हतः × × ×' इति युधिष्ठिरवचनात् सुतनिधने दृढविश्वासात् न तु भयात्, भयस्य चर्चैव का तादृशो वीरस्य ! परित्यक्तमसि । अहमपि त्वां विमोक्ष्ये—त्यक्ष्यामि त्यजामीत्यर्थः । यतः त्यागात् भवते स्वस्त्यस्तु—कल्याणमस्तु । अत्र पितृकृतत्यागे पुत्रशोकजन्यता हेतुरुक्तः, द्वितीये आत्मकृतशस्त्रविमोचने—अनुक्तः । अतोऽत्र वाचकाऽऽकांक्षाऽपूर्तिदोषमूला निर्हेतुता । क्वचिदहेतुताया अदोषत्वम् । यदुदीरितम्—'निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति ।'

अनवीकृतत्वं यथा—

" प्राप्ताः श्रियः सकलकामदुघास्ततः किम् ?
दत्तं पदं शिरसि विद्विषतां ततः किम् ?
सन्तर्पिताः प्रणयिनो विभवैस्ततः किम् ?
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ?

( वैराग्य शतकम् )

अत्र " ततः किम् " इति न नवीकृतम् ।

पौनरुक्त्यं यथा—

" अस्त्र-ज्वालावलीढ-प्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथेस्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।

कर्णालिं सम्भ्रमेण, व्रज कृप ! समरं मुञ्च हार्दिक्य ! शङ्काम् ।
ताते चापाद्वितीये वहति रणधुरां को भयस्यात्रकाशः ॥"

( वेणी सं० )

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः ।

अनवीकृतत्वम्—अनेकधा प्रतिपादनीयस्यार्थस्य प्रकारान्तरेण वक्तुमशक्यत्वम् । तथाहि,—प्राप्ता इति । भर्तृहरेः सूक्तिरियम् । सकलकामदुघाः—समस्ताभिलाषसम्पादिन्यः, श्रियः—सम्पदः, लब्धाः—प्राप्ताः, चेत्, ततः किम् तेन किं ते वास्तविकं मोक्ष सेत्स्यति ? नैवेत्यर्थः । विद्विषताम्—द्रोहिणाम्, शिरसि—मस्तके, चेत् पदम्—चरणम्, दत्तम्—स्थापितम्, ततः किम् ? जीवनोद्देश्यं न लब्धमिति भावः । विभवैः—सम्पद्भिः, प्रणयिनः—प्रेमपात्राणि, यदि सन्तर्पिताः—सन्तोषिताः, ततः किम् ? इदमपि व्यर्थमेवेति भावः । तनुभृताम्—प्राणिनाम्, तनुभिः—कायैः, कल्पम्—जगल्लयसमयम्, यावत् यदि स्थितम् ततोऽपि किं लब्धम् ? एतानि ऐहिकसुखानि भङ्गुराणि मुक्तिः परमात्मपदप्राप्तिरूपा विरागेणैव लभ्येति भावः । अत्र 'ततः किम्' इति पुनः पुनः प्रतिपादनीयं न भङ्ग्यन्तरेण नवीकृतम् ।

अनवीकृतत्वे एकस्यैवार्थस्य पुनः पुनस्तदेव प्रतिपादनं पिष्टपेषणवत् सहृदयं विमुखयति । इदमेव रचयितुरशक्तिजनितं सहृदयविमुखीकरणं दूषकताबीजम् । न च कथितपदत्वस्य एतस्य च पदावृत्तितया ऐक्यं शङ्क्यम्, पदान्तरोपादानेनाऽपि अर्थमूलस्य नवीभावस्याप्राप्तेः ।

पौनरुक्त्यम्—उक्तस्यार्थस्य पुनरुपादानम् । उदाहृतिः,—अस्त्रेति । भयात्पलायमानां चमूं पश्यतोऽश्वत्थाम्नः प्रमुखसेनापतीन्प्रत्युक्तिरियम् । अस्त्रज्वालया—आयुधरूपज्वालया, अवलीढः—व्याप्तः, यः प्रतिबलजलधिः—शत्रुसेनासागरः, तस्य अन्तः—मध्ये, और्वायमाणे—और्वाग्निवत् आचरति, तद्वत् शत्रुदाहके इत्यर्थः । सर्वधन्वीश्वराणाम्—समस्त

प्रधानधनुर्धारिणाम्, गुरौ – शिक्षके सेनानाये—कौरवसैन्याध्यक्षे, मम पितरि—द्रोणाचार्ये, स्थिते —वर्तमाने सति, हे कर्ण ! सम्भ्रमेण भीत्या चाञ्चल्येन, अलम् ? मा भीतो भूः ! कृप—मातुल कृपाचार्य, समरं—युद्धस्थलम्, व्रज—धाव, नैव पलायस्व । हार्दिक्य !—कृतवर्मन् !, त्वं शङ्काम्—पराजयसन्देहम्, मुञ्च—दूरं परिहर ! चापद्वितीये—धनुर्मात्रसहायके, ताते—द्रोणे, रणधुराम्—सङ्ग्राम-सञ्चालनभारम्, वहति सति भयस्य—त्रासस्य कोऽवकाशः ? न कोऽपीत्यर्थः । स्रग्धरावृत्तम् । अत्र रूपकान्वितोपमा 'मम पितरि' 'मम'—पदम् मादृशो वीरपुत्रस्य पितापि तादृगेव शूरः इति ध्वनिरपि स्फुरति । किन्तु अत्र 'स्थितेऽस्मिन्' इति द्रोणस्य तत्र स्थितौ सूचितायां पुनः 'रणधुरां वहति' इत्युपादानं पौनरुक्त्यं नाम दोषं प्रसूते । पौनरुक्त्यम् अर्थपरम् परिवृत्तिसहिष्णु च कथितपदत्वं शब्दपरं परिवृत्ति—सहत्वाभावात् ।

ख्याति विरुद्धता यथा——

"ततश्चचार समरे शितशूलधरो हरिः ।"

अत्र हरेः शूलं लोकेऽप्रसिद्धम् ।

विधेः——विधेयस्य, अनुवादः—अप्राधान्येन निर्देशः । यथा—प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशाम् ।" इत्यत्र 'शयिनः प्रयत्नेन बोध्यसे इति विधेयम् ।

ख्यातेः—लोके कविसम्प्रदाये च प्रसिद्धेः प्रचलितव्यवहारस्येत्यर्थः । विरुद्धत्वम्—वैपरीत्यम् । तदेव ब्रूते—ततः—अनन्तरम्, शितशूलधरः—तीक्ष्णशूलायुधधारी, हरिः रणे – समरे, चचार—निःशङ्कं बभ्राम । अत्र चक्रधरस्य विष्णोः क्वापि न लोके न कविजगति शूलं शस्त्रं प्रसिद्धम् । प्रसिद्धविरुद्धतया निबद्धयितुरनुभवद्वारिद्र्यं प्रकटीभवति तज्जनितं

भावकचित्तोद्वेजनम् दोषबीजम् । इह शूल शब्दस्य पर्यायान्तरेणापि दोषसद्भावः, प्रसिद्धिहतत्वे तु न तथेति भेदः ।

सम्प्रति यथावसरं कविसमयप्रसिद्धिर्दर्पणात् सङ्गृह्यते—

"मालिन्यं व्योम्नि पापे, यशसि धवलता, वर्ण्यते हासकीर्त्यो रक्तौ च क्रोधरागौ, सरिदुदधिगतं पङ्कजेन्दीवरादि । तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घो ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः ॥ "पादाघातादशोकं विकसति, वकुलं योषितामास्यमद्यै-र्यूनामङ्गेषु हाराः स्फुटति च हृदयं विप्रयोगस्य तापैः । मौर्वी रोलम्बमाला, धनुरथ विशिखाः कौसुमाः पुष्पकेतोर्भिन्नं स्यादस्य बाणै-र्युवजनहृदयं स्त्रीकटाक्षेण तद्वत् ॥" "अह्नम्भोजं, निशायां विकसति कुमुदं, चन्द्रिका शुक्लपक्षे, मेघध्वानेषु नृत्यं भवति च शिखिनां, नाप्यशोके फलं स्यात् । न स्याज्जाती वसन्ते, न च कुसुमफले गन्धसार द्रुमाणाम् इत्याद्युन्नेयमन्यत्कवि समयगतं सत्कवीनां प्रबन्धे ॥"

आकाशपापादौ निकृष्टे मालिन्यम्, हासकीर्त्यादिषु उत्कृष्टेषु उज्ज्वलता । क्रोधानुरागयोः रक्तिमा, वर्णाः प्रयोज्याः । इत्यादि प्रथमपद्यगता प्रसिद्धिः अनुभवजन्या स्वाभाविककल्पा । द्वितीये योषितां पादाघातादिना अशोकविकाशादि अस्वाभाविकमपि कविवर्णने प्रसिद्धम् । कामस्य मौर्वी प्रभृति तदुत्तेजकतया भ्रमरमालेव प्रसिद्धा शास्त्रीयाऽपि । तृतीयपद्ये दिवसे कमलविकासादि स्वभावानुकूलं लोकप्रसिद्धम् । अन्यत्स्पष्टम् ।

विध्यनुवादः—विधेयस्योद्देश्यत्वप्रकल्पनम् । तथाहि—निशां दोषे—उषसि इत्यर्थः । अद्य—सम्प्रति, स्तुतिभिः—बन्दाभिः, लोकनाथः प्रयत्नेन परिबोधितः—आयासेन जागरितः । अत्र बोधनं विधेयम्, तच्च समस्तीभूत—प्रयत्न—शब्द—संसर्गेण कृत्क्रिया पदत्वमपहाय अनुवाद्यम्—उद्देश्यत्वम् आजगाम । इति विध्यनुवादः । अविमृष्ट—विधेयांशत्वे विधेयस्य तारतम्यमेव पौर्वापर्यव्यत्ययेन हन्यते इह तु सर्वात्मना उद्देश्ये परिणम्यते । इति स्फुटो भेदः ।

इतः पूर्वं शरीरस्वरूपेणाभिमतयोः शब्दार्थयो र्दोषान् व्याख्याय रचनात्मनो रसस्य दोषाः—साक्षात् तत्प्रतीतिनिरोधकाः—सम्प्रति प्रतिपाद्यन्ते—

" रसस्योक्तिः स्वशब्देन स्थायि-सञ्चारिणोरपि ।
प्रतिकूल-विभावादि-ग्रहो दीप्तिः पुनः पुनः ॥
अकाण्डे प्रथनच्छेदावङ्गस्याप्यातिविस्तृतिः ।
इत्यादिकाः सहृदयै रसे दोषाः प्रकीर्तिताः ॥"

रसस्य स्वशब्देन—'रसः' इति शब्देन, हास्यादि शब्देन वा, अभिधानम् । स्थायिनां—उत्साहादीनाम्, सञ्चारिणां—निर्वेदादीनाञ्च स्वनाम्ना कथनं दोषः । प्रतिकूलानां—विरुद्धानां विभावादिनां ग्रहः—ग्रहणम् । यथा आदित्ये निर्वेदादीनां शान्तसञ्चारिणाम्, वीरे च वैवर्ण्यत्रासादीनां भयानकस्यानुभावादीनां ग्रहणम् ।

रसस्य—काव्यात्मस्वरूपस्य व्यङ्गयस्य विभावादिसंवलितस्य आस्वादपदवीं गतस्य रत्यादिस्थायि भावस्य, स्थायिभावस्य—यावद्रसप्रतीतिं सतः रत्युत्साहादेः, सञ्चारिणः—रसोपकारिणो निर्वेदादेः, स्वशब्देन—निजनाम्ना उक्तिः—अभिधानम, व्यञ्जना-प्रतिपादनीयस्य अभिधया प्रतिपादनम्, दोषः ।'तां विलोकयतस्तस्य रसः कोऽप्युपजायते' इह रसपदम् आस्वादस्वरूपस्य रसस्य विघातकम् । एवं—'मे मनसि शृङ्गारो वर्द्धते' 'तस्यां दृढा तद्रतिः' निर्वेदमाप्नोम्यहम्' इत्यादिषु स्वनाम्ना उदीरिताः 'रस—तद्‌भेद-स्थायि सञ्चारिणः' न तात्विक रस परिपोषकाः । अतएव तदनुपकारितया दुष्टाः । किं 'मेघ' नाम श्रवण मात्रेण मयूरो नर्तितुं प्रवर्तते ? किं वा 'तरवारि' पदोपादानेनैव शत्रुशिर उच्छिद्यते ? अपि वा 'भैरव-माल कोश' मात्रोच्चारणेन रागस्वरूपं श्रोतॄणामानन्दं वर्द्धयति ? पुन र्यथा दत्तमपि दानं मुहुर्मुहुः

स्वयमेव तत्कीर्तनेन क्षयमेति तथा व्यङ्ग्योऽपि रसः स्वनामोच्चारितः अधः स्रवति।

प्रतिकूलानाम्—रस—विशेष—विपरीतानाम्, विभावादीनाम्—आत्मरस कारणी भूतानाम्, ग्रहः—विपरीतरसे उल्लेखः, दोषः। स्पष्टयति—आदिमे—सर्वतोऽधिकप्रचारतया कोमलतया च प्रथमतया उल्लेखनीये शृङ्गारे इत्यर्थः। शान्त—सञ्चारिणाम्—शान्त रसोपकारिणाम्, निर्वेदादीनाम्—आत्मग्लानिप्रभृतीनाम्, आदि पदेन अलसतादे र्ग्रहणम्, उल्लेखः दोषः। न हि आत्मग्लानियुतस्य रतौ प्रवृत्तिर्भवति। एवं वीरे—उत्साहस्थायिभावके रसे, वैवर्ण्यम्—मुखवर्णवैपरीत्यम्, त्रासः—भयम्, आदिपदेन दैन्यजडतादि, तेषां भयानकरसानुभावानां सलिलानलवद्विरोधि धर्माणां कुतः सम्भावना? पुनरिमे तत्र निबद्धाः सिद्धा एव दोषाः।

'दीप्तिः पुनः पुनः' इत्यारभ्य 'प्रकृतीनां विपर्ययः' इति यावत् कारिकोदीरिता अधो निर्णीयन्ते—

पुनः पुनः दीप्ति र्यथा—कादम्बर्यां महाश्वेताविलापः।

अकाण्डे—अनुचितावसरे प्रथनं—प्रकटनम्। यथा—वेण्यां द्वितीयेऽङ्के अनेकवीरसंक्षये प्रवृत्ते दुर्योधनस्य भानुमत्या प्रमोदवर्णनम्।

अकाण्डे छेदो यथा—वीरचरिते राघवभार्गवयोर्द्वारावरूढे सङ्ग्रामे 'कङ्कण-मोचनाय गच्छामि' इति राघवस्योक्तिः।

अङ्गस्य अतिविस्तृति र्यथा—किरातार्जुनीये सुराङ्गना-विलासादि वर्णने।

अङ्गिनोऽननुसन्धानं यथा—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्याऽऽगमने सागरिकाया विस्मृतिः।

प्रकृतयः दिव्याः, अदिव्याः, दिव्यादिव्याश्च । तेषु च धीरोदात्तादयः तत्र यो यथाभूतः तस्य अयथावर्णने प्रकृतिविपर्ययो दोषः ; यथा रामस्य छद्मना वालिवधः । यथा कुमार सम्भवे अष्टमे उत्तमदैवतयोः पार्वतीपरमेश्वरयोः सम्भोगवर्णनम् ।

पुनः पुनः दीप्तिः, प्रथमं वर्णितस्य अवसानमिव प्रदर्श्य पुनस्तस्य उद्वेगपूर्वकं भूयो भूयो वर्णनम् समुत्तेजनमिति यावत् । यथा सुप्रसिद्ध गद्यकवि-बाणभट्ट-विरचितायां 'कादम्बर्यां,' पुण्डरीकनिधनतः हृतसर्वस्वायाः महाश्वेतायाः करुणं क्रन्दनं वाचकान् मध्ये दत्तविश्रामं पुनः पुनः रोदयति। दोषेणैतेन वाचकाः सोत्साहं न पुरतः न पठितुं प्रवर्तन्ते ।

अकाण्डे-अप्रसङ्गे, अवसर-प्रतिकूल-रसादीनां प्रकाशः । नारायणभट्ट विरचिते 'वेणीसंहार' नाम्नि नाटके द्वितीयेऽङ्के भट-प्रतिभटयोः भयङ्करे सङ्गरे प्रवृत्ते, वीररौद्रादे हृदय-विस्फारि-वृष्टौ भानुमत्या सङ्गतस्य दुर्योधनस्य शृङ्गारे प्रवृत्तिः दुग्धाम्लसंयोगवत् कस्य न मनो विकारयति ?

अकाण्डे छेदः, अनवसरे प्रकृतस्य त्यागः । यथा भवभूति प्रणीते 'महावीर चरिते' नाटके राम परशुरामयो द्वीराधिरूढे-प्रारम्भमागते सङ्ग्रामे 'कङ्कणमोचनाय गच्छामीति सूचकम् 'एवम्' इति रामचन्द्रस्य स्वीकार-वचनं ( क्षुत्क्षामस्य पुरतो भोजनपात्रमुपहृत्य पुनरतर्कितमादान-मिव ) दर्शकानां चेतो विधुनोति; उग्रां विरुचिं च जनयति ।

अङ्गस्य—गुणीभूत—विषयस्य, अतिविस्तृतिः—अङ्गिनमनादृत्य तदङ्गविस्तारः । यथा—वीररस—प्रधाने 'किरातार्जुनीय' काव्ये अङ्ग-भूतस्य सुराङ्गनाविलासादिविषयस्य शृङ्गारस्य कियतः सर्गान् व्याप्य वर्णनं ( तीर्थायप्रस्थितस्य वारवनिता—गृह—पथ प्रदर्शनमिव निन्दितम् ।

अङ्गिनः—प्रकृत—प्रधान—वस्तुनः, अननुसन्धानम्—अनन्वेषणम् । यथा हर्ष विरचितायां 'रत्नावली' नाटिकायां चतुर्थेऽङ्के सागरिकापितृ गृहात् आगतेन वाभ्रव्यनाम्ना कञ्चुकिना सम्भाषमाणस्य वृत्तान्तरञ्ज

शृण्वतः मुखेन प्रधाननायिकायाः सागरिकाया एकधाऽपि चर्चा न कारिता इत्यङ्गिनोऽननुसन्धानं (पाठशालायै प्रस्थितस्य रङ्गगृहगमनमिव) नोत्कर्षाय।

प्रकृतयः – स्वाभाविक—वृत्तयः, यथोचित गुणचेष्टादयः, तासां विपर्ययः—अन्यथा भावः। तद्विशदयति। दिव्याः—दिविभवाः, उत्तम प्रकृतयो देवादयः, अदिव्याः—तदतिरिक्ताः सामान्य सांसारिकाः, दिव्या-दिव्याः—दिव्या अपिसन्तोऽदिव्या इवा चरन्तः। तत्र प्रकृतयः – धीरोदात्तादयः, तत्र यो यादृशः तादृशस्वभावचेष्टादि—विपरीतता प्रकृति-विपर्ययः। यथा राम उदात्तनायकः, तस्य गुणः सात्त्विकः, किन्तु वालिवधे तस्य छलप्रदर्शनं रामस्य धीरोद्धतोचितं गुणं सूचयति। एवम् उत्तमचरितयोः पित्रोरुमाशिवयोः प्राकृतजनवत् सम्भोगवर्णनं कस्य न मनो मुद्रयति ?

उक्तानां दोषाणां केषाञ्चित् क्वचिद्दोषत्वं, क्वचिद्गुणत्वञ्च।

" अनुकरणञ्च सर्वेषां दोषाणां स्याददोषता।"

यथा प्रलपत्येष वैधेयः 'स्कन्धस्ते यदि बाधाति।' अत्र बाधतीति दुष्टमप्यनुकरणत्वाददुष्टम्।

इति दोष-विवेचनं नाम पञ्चम-शिखा।

नित्याऽनित्यत्वाभ्यां द्विविधो दोषः तत्र रस प्रकारमात्राऽपकर्षकत्वे सति वक्तृवस्थादिभिः समाधातुमशक्यत्वं नित्यदोषत्वम्। रस विशेष-मात्रापकर्षकत्वे सति रसान्तरोपकारपूर्वकं वक्तृवस्थादिभिः समाधातुं शक्यत्वम् अनित्यदोषत्वम्। एवं श्रुति-कटुत्वादयः शृङ्गारपरिपन्थिनोऽपि रौद्रादावुपकुर्वन्तः अनित्याः। विधेयाविमर्शप्रभृतयः सर्वत्र प्रकृतवस्तु प्रतीतिप्रतिघातकाः समाधातुमशक्या नित्यदोषाः।

ततो दोषाणां केषाञ्चित् अनित्यानामित्यर्थः क्वचिद् गुणत्वम्—उपकर्ष-कत्वम्; क्वचित् अदोषत्वम्—अनुपकारकत्वेऽपि अनपकारित्वम्। यथा—

'सम्भ्रमे विस्मये हर्षे गुणः काप्यधिकं पदम्' इति प्रदर्शितदिशा 'अर्घ्यमर्घ्यमस्मै महात्मने' 'चित्रं चित्रं चलच्चित्रगानम् (टॉकी-सिनेमा)।' 'हन्त हन्त लब्धमद्य लभ्यम्' इत्यादौ पुनरुक्ति-र्गुणायैव समपद्यत । अदोषत्वं यथा—'स्यातामदोषौ श्लेषादौ निहि-तार्थाऽप्रयुक्तते ।'

किन्तुनित्यानामनित्यानां द्विविधानामपि दोषाणामनुकरणे—केन चिदुदितस्य यथावत् पुनरुल्लेखे, अदोषता । वैधेयः—मूर्खः, प्रलपति-अविचारं जल्पति, बाधति-बाधते इति संस्कृतं रूपम् । प्रलपतीत्युदाहरणे व्याकरणसंस्कारच्युतस्य आत्मनेपदिनो बाधृधातोः परस्मैपदे प्रयोगो दुष्टोऽप्यनुकरणे वक्तुर्वैधेयतां प्रकटयितुम् अनुवादे न दोषो जातः ।

इति स्नेहवर्षिण्यां पञ्चमः कल्पः ।

## षष्ठशिखा

अथ काव्योत्कर्षे प्रधानहेतुभूतस्य आत्मभूतरसस्य नित्यसम्बन्धिनो गुणस्य कीदृक् स्वरूपमिति विशदयति—

"ये रसस्याङ्गिनो धर्माः शायादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥"

आत्मन एव हि यथा शौर्यादयो नाकारस्य तथा रसस्यैव माधुर्यादयो गुणाः, न वर्णानाम् । अचल-स्थितयः नियतावस्थानाः ।

"माधुर्य्यौजः प्रसादाख्यास्त्रयस्ते समुदीरिताः ।

य इति । अङ्गिनः—काव्यात्मभूतस्य, रसस्य—शृङ्गारादेः, उत्कर्षस्य—विलक्षणतायाः, हेतवः—कारणीभूताः, अचला—अन्वयव्यतिरेकाभ्यां रसे नियता, स्थितिः—अवस्थानम्, येषां ते, धर्माः साक्षात्सम्बन्धाः,

ये सन्ति ते एव गुणाः गुणपदवाच्या रसधर्माः स्युः। दृष्टान्तेन स्पष्टयति—यथा आत्मनः—देहिनः, शौर्यादयः—शूरतोत्साह-प्रभृतयो धर्माः सन्ति तथैवेतिभावः। तदेवं यथा दृढेऽपि शरीरे शौर्योत्साहाद्यदर्शनेन, अदृढेऽपि तद्दर्शनेन अन्वयव्यतिरेकाभ्याम्—देवदत्तः—तत्पदवाच्य आत्मा—शूरो न तु तस्य शरीरं शूरमित्युच्यते तथैव रसस्यैव एते माधुर्यादयो गुणाः सन्ति न तु वर्णानाम्—अक्षराणाम्। एते वर्णाः तद्व्यञ्जका एव भवितुं शक्नुवन्ति।

'अचलस्थितयोरसधर्माः' इत्युपादानेन उत्कर्ष—हेतुभूतेभ्योऽलङ्कारेभ्योऽस्य व्यवच्छेदः। गुणत्वं च रसोत्कर्षकत्वे सति तदव्यभिचारिस्थितित्वम् अव्यभिचारेण च रसोपकारकत्वम्। ते माधुर्यम्, ओजः, प्रसादः, इति त्रिप्रकारा गुणाः, नवीनैः काव्यप्रकाशकारादिभिर्वामनदण्डिप्रभृतिभ्यः पश्चात् जातैः, इति शेषः समुदीरिताः—प्रतिपादिताः। प्राञ्चस्तु—'श्लेषः प्रसादः समता माधुर्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः। इति शब्दार्थयोर्दश गुणाः।

रसास्वादे सचेतसां तिस्रो दशा भवन्ति। शृङ्गारकरुणशान्तेषु आस्वाद्यमानेषु चित्तं द्रवति गद्गदता प्रादुरास्ते, वीराद्भुतादिषु हृदये ओजः—उग्रतादि उद्भवति, एवमविशेषेण साधुशब्दार्थप्रयोजितेषु समस्तेष्वपि रसेषु प्रसादः—प्रसन्नता मुग्धीभाव इति यावदुदेति। अग्नेर्दाहः, सलिलस्य शैत्यमिव रसानामिमे एव धर्माः। त एव गुणनाम्ना वाच्याः।

माधुर्यस्य सर्वतो मनोरमतमस्य लक्षणं विशिष्य प्रयोगप्रकारश्च लक्ष्यप्रदर्शनपुरस्सरं निरूप्यते—

"आह्लादकत्वं माधुर्यं चित्तस्य द्रुतिकारणम्।
करुणे विप्रलम्भे तत् शान्ते चातिशयान्वितम्॥"

(मम्मटः)

प्रह्लादकत्वम्—आनन्दजनकत्वम्, द्रुतिः—गलितत्वमिति । अत्यन्त द्रुति हेतुत्वात् ( करुणादौ ) इत्यर्थः ।

"मूर्द्ध्नि वर्गान्त्यवर्णेन युक्ताष्टटडढान्विना ।
रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ॥
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ॥"

( विश्वनाथः )

आह्लादकत्वमिति । आह्लादयति—लोकोत्तरानन्देन चित्तं विस्फारयतीति तत्त्वम्—सातिशयानन्द—प्रदायित्वं माधुर्यम् । तस्य चेतसो द्रुतेः—मनसः स्यन्दनस्य, कारणम्—हेतुभूतम् , भवति । माधुर्येण झटिति चित्तं द्रवतीतिभावः । केचित् आह्लादएव आह्लादकः, तत्त्वम्—आनन्दस्वरूपत्वं माधुर्यमिति आह्लादस्वरूपे रसे धर्मत्वेन सङ्गमयितुं व्याचख्युः । तद्युक्तं प्रतिभातीति विवेचनीयम् । करुण इति । तत्—माधुर्यं करुणे—शोकस्थायिभावके, विप्रलम्भे—विप्रयोगशृङ्गारे, शान्ते—शमस्थायिभावके रसे, अतिशयेन—प्रभावप्राचुर्येण, अन्वितम्—युक्तम्, भवति । सामान्यतः सम्भोगशृङ्गारे भवतीति 'विप्रलम्भ'—परिशेषादागतम् । गलितत्वमिव चेतसो गलनं च भवति अतः तत्साम्यसूचनाय इव पदम्, द्रवीभाव इत्यर्थः ।

अत्र कीदृशी रचना; वर्णाश्च के उपनिबन्धनीयाः ? इत्यत आह—मूर्ध्नीति । मूर्ध्नि—अन्ते, पदस्य यथा सम्भवं चरणादेरपि बोध्यम् । वर्गस्य—कवर्गचवर्गादेः, अन्त्यः—अन्तिमः, यो वर्णः 'मन—प्रभृतिः, तेन सहिताः, 'टठडढात्' विना एतैरक्षरै रहिता वर्णाः, लघुः—ह्रस्वः, लघुः—असंयोगादिपरश्च ( सरूपाणामित्येकशेषः ) इति लघू यथा सम्भवं दीर्घ गुरुरहिते मात्रे इत्यथः रेफोणकारश्च ( यथा 'स्मरणम्' इत्यादौ ) वर्णाः, तस्य—माधुर्यस्य, व्यक्तये—स्फुटीकरणाय हेतुत्वं गताः—हेतवो भूताः । एतेन वर्णानां गुणत्वं ब्रुवतां वामनाचार्याणां मतमपास्तम् । तथा

पुनः—अवृत्तिः—समासरहिता, सति सम्भवे अल्पा—विरला, वृत्तिः—समासप्रयोगः, यत्र सा, मधुरा—श्रुतिसुखा, रचला—पदप्रयोगः, कारणतां गताः माधुर्यस्येति शेषः ।

तदुदाहरति—

तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।

विधुरां ज्वलनातिसर्जनान्ननु ! मां प्रापयपत्युरान्तिकम् ॥"

कुमारसम्भवे शिवेन दग्धस्य मनोभवस्य विरहेण विलपन्त्याः 'वसुधालिङ्गिन धूसरस्तन्या' रत्या वसन्तं प्रत्युक्तिः। ननु—अङ्ग ! वसन्त ! अनन्तरम्—इतः परम्, भवता-त्वया, इदमुपस्थितं बन्धुजन प्रयोजनम्-सुहृज्जनोचितकृत्यम्, क्रियताम्—विधीयताम्, विपत्तिसमये ईप्सित-साधनमेव बन्धूनां कृत्यं भवति, अतस्त्वयाऽवश्यमहमुपकर्तव्येति भावः । किन्तत् प्रयोजनम् ? इत्यत आह—विधुरां—पतिवियुक्ताम्, मां रतिम्, ज्वलने—चिताग्नौ, अतिसर्जनात्—विसर्जनात्, पतिशरीरेण साकं दग्ध्वेति यावत् । पत्युः—स्वामिनो मदनस्य, अन्तिकं—सान्निध्यम्, प्रापय—नय । वैतालीयं वृत्तम् । स्वभावोक्तिः । अत्र करुणरसात्मके काव्ये टकार प्रभृति कर्ण कटुवर्णवर्जनेन अल्पवृत्त्या मधुर—रचनया व्यक्तं माधुर्यं कस्य न चेतो द्रवयति ?

ओजोगुणस्य स्वरूपं प्रयोगप्रकारं दर्पणकृतः कारिकामुद्धृत्य सङ्कलयिता विवृणुते—

ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते ।

वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ॥

वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ।

उपर्यधो द्वयो र्वा सरेफौ टठडढैःसह ॥

शकारश्च षकारश्च तस्य व्यञ्जकतां गताः ।

तथा समासबहुला घटनौद्धत्यशालिनी ॥"

चित्तस्य—आन्तरस्य, विस्ताररूपम्—विस्मयजन्यविस्फाररूपम्, दीप्तत्वम्—उग्रत्वम्, ओजः—तदाख्योगुणः, उच्यते । अस्यौजसः—वीरे—उत्साह-स्थायि-भावके, बीभत्से—जुगुप्सास्थायिभावके, रौद्रे—क्रोधस्थायि भावके, रसे क्रमेण आधिक्यम्—उत्तरोत्तरमुत्कर्षो भवति । ओजो व्यज्यते कथम् ? तदेव ब्रूतेः—वर्गस्य—कवर्ग चवर्गादेः, आद्यः—प्रथमः, कचतटपेत्यादिः, तृतीयः— ग ज डेत्यादिः, ताभ्यां युक्तौ तयोः—प्रथमतृतीयवर्णयोः, अन्तिमौ—अन्ते भवौ, ख छेत्यादिः ( प्रथमस्य ), घ झ ढादिः ( तृतीयस्य ) यथा 'च्छ त्थ' ड्ढ ब्भ' प्रभृतयः । एवम् उपरि—शीर्षके, अधः—निम्नभागे, द्वयो र्वा भागयोः सरेफौ—रेफ सहितौ, यथा 'र्द्ध' इत्यादि । 'ट ठ ड ढैः' विकटोच्चारणै र्वर्णैः सह एवं शकारषकारादिवर्णाः तथा सामासबहुला—दीर्घवृत्तिः, औद्धत्येन—औत्कट्येन, शालते—शोभते, या सा विकटाक्षरबन्धा, घटना—पदयोजना, तस्य व्यञ्जकतां गताः, व्यञ्जका इत्यर्थः । यथा सङ्ग्रामभूमौ काञ्चीकिङ्किणीनिक्कणं विस्मरन्तः शङ्खनाद-हस्तिबृंहित-हयहेषा कलापाय कर्णं सज्जयन्ति तथैव सौकुमार्यप्रसारिपदावलीं परिहरन्त उद्धतवर्णान् चेतो विस्मापकान् रचनायां योजयन्ति ।

उदाहरणेन समर्थयति—

"चञ्चद्भुज-भ्रमित-चण्ड-गदाऽभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्ध-घन-शोणितशोणपाणि-
रुत्तंसयिष्यति कचाँस्तव देवि, भीमः ॥"

( वेणी सं० )

वेणी संहारे दुःशासन कृतकेशापकर्षण-कदर्थितां द्रौपदीं प्रति भीमस्य वाक्यम् । चञ्चद्भ्याम्—वाढं स्फुरद्भ्याम्, भुजाभ्याम्—बाहुभ्याम्, भ्रमितायाः—चतस्रं सञ्चालितायाः, गदायाः अभिघातेन—

प्रहारेण, सञ्चूर्णितम्—सम्यक् चूर्णीकृतम्, उरुयुगलं यस्य तस्य, सुयोधनस्य—धृतराष्ट्रपुत्रस्य, स्त्यानम्—दृढम्, अवनद्धेन—संसक्तेन, घनशोणितेन—बहुलरक्तेन, शोणौ—रक्तौ, पाणी यस्य सः भीमः, हे देवि! तव कचान्—केशान्, उत्तंसयिष्यति—विभूषयिष्यति। ('कचः केशः शिरोरुहः') वसन्ततिलकं वृत्तम्। समासबहुलं संयुक्तवर्णविशिष्टम् उद्धत—घटनमिदं वाक्यं वाचकानां मनांसि विस्फारयदोजोगुणं सम्यक् व्यनक्ति।

सर्वजनप्रियं सकलरससामान्यं प्रसादं निरूपयति—

"चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवाऽनलः।
स प्रसादः समस्तेषु रसेषु रचनासु च॥
शब्दास्तद्व्यञ्जका अर्थ-बोधकाः श्रुतिमात्रतः॥"

यथा—

"गृहिणी सचिवः सखी मिथः प्रियाशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किन्न मे हृतम्॥"

चित्तमिति। यो गुणः अनलः—अग्निः, शुष्केन्धनमिव—नीरसदारु, इव क्षिप्रम्—नाल्पेनाऽपि विलम्बेन, चित्तं—मनः, व्याप्नोति—हृदयमावृणोति, श्रवणास्वादसमकालमेव सुखेन आन्तरं प्रविशति स प्रसादः—प्रसाद्यते—मोद्यते अनेन इति, तदाख्यो गुणः। समस्तेषु यावत्सु रसेषु समानः सर्वत्रैव स्फुटः सन् प्रीणातीत्यर्थः। रचनासु—पदयोजनासु, श्रुतिमात्रतः—श्रवणसमकालमेव, अर्थ बोधकाः—पदार्थज्ञापकाः, शब्दाः तद्व्यञ्जकाः—प्रसादगुण—प्रत्यायकाः भवन्तीति शेषः।

गृहिणीति—। दिव्यमालास्पर्शेन स्वर्गतप्राणायाः इन्दुमत्या विरहे विलपतोऽजस्य मर्मस्पृग् वचः। (त्वं मे इति योज्यम्) गृहिणी—गृहकार्यं सञ्चालिनी, सचिवः—हितवचनाऽभिधायिनी, मिथः—एकान्ते, सखी—मनोविनोदिनी वयस्या, ललिते—मनोरमे, कलाविधौ—

काव्य-सङ्गीत-चित्ररचना—प्रभृतौ, प्रियशिष्या—हृद्या अन्तेवसन्ती, आसीः । एतादृशीं मम सर्वस्वरूपां त्वां हरता—मत्तो दूरीकुर्वता करुणाविमुखेन—निर्दयेन, मृत्युना—कालेन, किं मे न हृतम्—चोरितम्, ? अपि तु सर्वमेवापनीतम् । एकामेव त्वामन्तरेण मे सर्वं विनष्टम् ! जगदेव शून्यं संवृत्तम् !! वियोगिनी वृत्तम् । अर्थं वमद्भिः पदैः स्यूतमिदं पद्यं वाचयन् हृल्लग्नभावः को न प्रसादगुणं स्तुयात् ।

इत्यादिकं कालिदासग्रन्थेषु रामायणे च बाहुल्येन द्रष्टव्यम् ।

"एषां शब्दगुणत्वञ्च गुणवृत्योच्यते बुधैः ॥"

इति गुण विवेको नाम षष्ठीशिखा ।

कालिदासादि ग्रन्थेषु प्रसादगुणमण्डितेषु लक्ष्यान्वेषणाय वाचकाननुरुन्धन्, आत्मनो रसस्य धर्म—भूतानामेषां गुणानां शब्दगुणत्वं सङ्गमयन् कारिकामवतारयति—एषामिति । एषां तत्तद्विशिष्टशब्द व्यक्तानाम्, गुणानाम् माधुर्यादीनाम्, गुणवृत्त्या—परम्परया, लक्षणयेति यावत्, शब्दगुणत्वम्—शब्दधर्मत्वम् बुधैः—काव्यमर्मविद्भिः, प्रतिपाद्यते । गुणवृत्तिः—परम्परा सम्बन्धः आश्रयाश्रयिभाव—प्रभृतिः स्वव्यञ्जकतादिरूपा वा । तथाहि—शब्दमाश्रित्यैव अर्थः उद्भवति । तत एव रसो व्यक्तः । रसधर्म एव गुणः । अतः परम्परासम्बन्धेन शब्दधर्मत्वमपि गुणानां न युक्तितो दूरम् ।

इति स्नेहवर्षिण्यां षष्ठः कल्पः ।

# सप्तम शिखा ।

काव्योत्कर्षहेतुषु अन्यतमस्याः पदयोजनात्मिकाया रीतेः स्वरूपं विवेचयन् दण्डिनः कारिकामवतारयते—

अस्त्यनेको गिरां मार्गः सूक्ष्मः भेदः परस्परम् ।
तत्र वेदर्भ गौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥"

प्रस्फुटान्तरौ——स्फुटप्रतीयमानभेदौ, मार्गः——रीतिः, सा च पदविन्यासप्रणालीरूपा ।

गिराम्—काव्योपयोगिनीनां वाचाम्, मार्गः—योजनाक्रमः, रीतिरितियावत् । परस्परम्—अन्योऽन्यम्, सूक्ष्मभेदः—किञ्चिद्विभिन्नभेदः, सहृदयैरेव बोध्य इत्यर्थः । अनेकः—नैकविधः पाञ्चाली लाटी प्रभृतिभिर्बहु प्रकारः । तत्र—तासु सूक्ष्मभेदासु रीतिषु प्रस्फुटान्तरौ—व्यक्तभेदौ, बुधेतरैरपि अवगम्यभेदौ यौ स्तः तौ ( वैदर्भीगौडी च ) वर्ण्येते—स्वरूपोदाहरण प्रदर्शनेन विशदीक्रियेते ।

रीतिः—रीयते—अवगम्यते गुणो यया सा । गुणाः पदयोजनयैव स्फुटं प्रतीयन्ते । रीतिः शब्दधर्मः ( व्यञ्जिका ) गुणो रसधर्मः ( रीत्या व्यक्तीकृतः ) । अतस्तयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । सा च पदविन्यासप्रणाली—पदयोजनाक्रमः, एव रूपं यस्याः सा । तदेव लक्षणेन व्यनक्ति—

पदसङ्घटना रीतिरङ्गसंस्था विशेषवत् ।"

अङ्गसंस्था विशेषवत्—गात्र संस्थान—( सन्धि ) विशेषवत्, पादानाम्—प्रयोगार्हाणां सुप्तिङन्तानाम्, सङ्घटना—वाक्ये योजना, रीतिः । यथा शरीरे करणादीनामवयवानां सम्यगवस्थानं शोभायै कल्पते तथैव काव्यशरीरभूते वाक्ये पदसङ्घटनारूपा रीतिः ।

रीतेरन्योऽपि पाञ्चाली—लाटी—प्रभृतिः प्रकारः किन्तु सूक्ष्मभेदतया तयोः प्रसिद्धे वैदर्भी गौडी च रीत्यौ लक्ष्येते । तत्र वैदर्भी—

" माधुर्यव्यञ्जकै वर्णैरचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥ "

ललितात्मिका—मधुरस्वरूपा, वृत्तिः—समासः, यथा—'तादिदं क्रियताम्'—इत्यादि पूर्वमुक्तम्।

माधुर्यस्य—आह्लादकत्वरूपस्य तदाख्यगुणस्य, व्यञ्जकैः—अवगमकैः, वर्णैः—'मूर्ध्निवर्गान्त वर्णेन—इति प्रदर्शितैः, ललितात्मिका—मनोहरा श्रवणसुखा, अवृत्तिः—सति सम्भवे विरल समासा, रीतिः—पदयोजना, वैदर्भी—तत्र बहुल—प्रचारतया विदर्भवासि—प्रियतया विदर्भस्यइयम्, सा नाम रीतिः। इष्यते—इष्ट तया प्रति पाद्यते। उदाहरणं माधुर्यगुणस्यैव दत्तं 'तदिदं क्रियतामनन्तरम्—इति पद्यं बोध्यम्। तत्र समेषामेव विरलसमास—निबद्धानां श्रुति—सुखानां पदानां सङ्घटना विहिता।

गौडीं डम्बरयति—

" ओजः प्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः।
समास बहुला गौडी दर्पणे समुदीरिता ॥

बन्धः—रचना, आडम्बरः—गाढः, यथा—'चञ्चद्भुज भ्रमित '—इत्यादि पूर्वमुक्तम्।

ओजोगुणप्रकाशकैः वर्णैः—रेफसंयुक्तटवर्गादिभिः, पूर्वोक्तैः, आडम्बरः—विकटः चेतोविस्फारकः, बन्धः—रचना पदनिबन्धनम् गौडी—गौडजनप्रिया रीतिः। सा च समास बहुला—बहुलप्रयुक्त—समस्तपदा, दर्पणे साहित्यदर्पणे, समुदीरिता—विश्वनाथ कविना प्रतिपादिता। एतस्या अपि लक्ष्यम् ओजो गुण प्रदर्शितोदाहरणमेव बोध्यम्। तत्र समासस्य बाहुल्यं बन्धस्य समुद्धतता, इति सर्वं स्पष्टमेव।

इति स्नेहवर्षिण्यां सप्तमः कल्पः।

# अष्टम शिखा

साहित्यशास्त्रे प्रधानं काव्योपस्कारकेष्वन्यतमं वाचि जीवनप्रदमलङ्कारं विवरीतुमनाः शिखामिमामारभते—

"काव्यशोभाकरान् धर्मानलङ्कारान्प्रचक्षते।"

ते च द्विविधाः—शब्दगताः, अर्थगताश्च। शब्दगताः—अनुप्रासयमकादयः।

अलङ्क्रियते काव्यमनेनेत्यलङ्कारः। स च चमत्कार्यभिधेयाऽभिधानप्रकाररूपः। इति व्युत्पत्त्या—काव्यशोभाकरान् काव्योत्कर्ष विधायकान्, धर्मान्—विच्छित्तिमूलान् शब्दार्थगताननुप्रासोपमादीन् अलङ्कारान् प्रचक्षते—अलङ्कारत्वेन प्रतिपादयन्ति। अनियततया शब्दार्थभङ्गिकाद्वारा रसोपकारकत्वे सति रसावृत्तित्वम् अलङ्कारत्वम्। रसावृत्तितया गुणानाम्, शब्दार्थभङ्गिकेति आलम्बनोद्दीपनादीनाम्, रसोपकारितया प्रहेलिकादीनाम्, इतो व्यवच्छेदः।

अनुप्रासादयो रसं साक्षादनुपकुर्वन्त इवाऽपि परम्परया तदुपस्कारकाः। न च विशिष्टवर्णविन्यासितया अनुप्रासादीनां रीतीनाञ्चैक्यमागतम्; रीतिषु कोमल-परुषसमस्तासमस्तादिनियमात् इह च सदृशवर्णादिसंसर्गजन्यविच्छित्तेः स्फुटो भेदः। शब्दगताः—अन्वयव्यतिरेकेण शब्दाश्रिताः। अतः इवादि धर्मवाचिसत्त्वेऽपि उपमा नहि शब्दालङ्कारे, तत्र च 'इव यथादि' शब्दानां परिवर्तनेऽपि नास्ति त्रुटिः। अनुप्रासः, यमकम्, आदिपदेन श्लेषाद्यपि शब्दालङ्काराः।

अर्थाश्रयीभूततया शब्दस्य, प्रथमं शाब्दानेवालङ्कारान् प्रस्तौति। तत्र अनुप्रासं निरूपयति—

"अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्।"

स्वरवैसादृश्येऽपि व्यञ्जनमात्रसादृश्यम् अनुप्रासः। स च

रसानुगुणो वर्णानां प्रकर्षेण न्यासः। यथा––

"लताकुञ्जं गुञ्जन्मदवदालिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि॥"

(विश्वनाथः)

स्वरः—स्वत उच्चरितो वर्णान्तरोच्चारणे नियतोपकारको वर्णभेदविशेषः, तस्य वैषम्येऽपि—साद्दश्याऽभावेऽपि यत् शब्दानाम्—व्यञ्जनानामितिभावः, पुनरावृत्तिपूर्वकं श्रुत्याद्यनुकूलं निबन्धनम्, अपि शब्दात् सति सम्भवे स्वराणामपि। अनु—रसानुगतः, प्र—प्रकर्षेण, न्यासः—वर्णानां निवेशनम्, अनुप्रासः। स्वरवैषम्येण यमकाद्भेदः। रसानुगतद्योतकेन 'अनु'—इति निपातेन पुनःकथन दोषस्य व्यवच्छेदः। श्रुति-वृत्ति-छेक-लाटाऽन्त्यादिभेदेन पञ्चविधः। तदुदाहरति—

लताकुञ्जमिति। वासन्तिकपवनवर्णने निबद्धमिदं पद्यम्। गुञ्जन्तः—मधुरं शब्दायमानाः' मदवन्तः—मकरन्दरसास्वादेन मदयुक्ताः, अलीनाम्—भ्रमराणाम्, पुञ्जाः—सङ्घाः, यत्र तम्, लताकुञ्जम्—लतापिहितस्थानम् (यद्यपि 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इति कोषात्कुञ्जपदेनैव लतासङ्गतत्वं समुपपन्नमथापि 'सकीचकैः मारुतपूर्णरन्ध्रैः' इत्यादिवत् 'कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः। सन्निधानादिबोधार्थम्' इति प्रदर्शितदिशा कुञ्जपदस्य सामान्यस्थानपरकतया लतापदस्य च विशिष्टव्रततीबोधनाय सूपपादनीयता।) चपलयन्—मन्दमन्दमान्दोलयन्। अङ्गम्—गात्रम्, समालिङ्गन्—सुखमाश्लिष्यन्, द्रुततरम्—स्पर्शसमकालमेव, अनङ्गं—कामविकारमित्यर्थः, प्रबलयन्—उद्रेकयन्, दलितम्—विभिन्नदलम्, अरविन्दम्—कमलम्, मन्दं मन्दम्—नात्यधिकवेगेन, तरलयन्—चञ्चलीकुर्वन्,

रजोवृन्दम्—परागपुञ्जम्, विन्दन्—गृह्णन्, मकरन्दम्—पुष्परसम्, दिशि दिशि—समन्तात्, किरति—प्रसारयति, अत्र आदिरसानुकूलानां श्रुतिसुखानां 'ञ्ज' 'न्द' 'यन्' वर्णानां पुनर्न्यासः। अतोऽत्रानुप्रासालङ्कारः।

यमकं नियमयति—

"सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।
क्रमेण तेनैवावृत्ति र्यमकं विनिगद्यते॥"

अत्र द्वयोरपिवर्णसंघातयोः क्वचित्सार्थकत्वं, क्वचिन्निरथकत्वम्। क्वचिदेकस्य सार्थकत्वमपरस्य निरर्थकत्वम्; अत उक्तं 'सत्यर्थे' इति। तेनैव क्रमेण 'दमो मोदः' इत्यादे र्विविक्तविषयत्वम्। एतच्च पदपादाद्यावृत्तित्वेन प्रभूततमभेदम्। दिङ्मात्रमुदाह्रियते—

"नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः॥"

प्रथमे पादे द्वयोरपि, द्वितीये प्रथमस्यैव, तृतीये च द्वितीयस्यैव सार्थकत्वं, चतुर्थे द्वयोरपि 'रभिंसु' इत्येतयो र्निरर्थकत्वम्।

सत्यर्थ इति। अर्थे—अभिधेये, विद्यमाने सति पृथग्भूतः—नैकः—असमानः, अर्थः—वाच्यपदार्थः, यस्यास्तस्याः, स्वरव्यञ्जनयोः संहतेः—समुदायस्य यथावद्वर्णसमूहस्य, तेनैव—यथास्थितेन, क्रमेण—परिपाट्या, आवृत्तिः—पुनः पठनम्, यमकम्—यमौ—द्वौ तत्प्रतिकृति यमकम् द्विरावृत्तमित्यायातम् 'इवे प्रतिकृतौ' इति कन्। तन्नामालङ्कारः।

ननु "शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः" इत्युक्तलक्षणे लाटानुप्रासे 'नयने तस्यैव नयने' अत्र नयन शब्दस्य पौनरुक्त्येन एवं

यमके 'व्यथयतेऽथ यतेरपि चेतनाम्' इत्यत्र 'थयते' इत्यस्य च पौनरुक्त्येन तयोरैक्यमागतमिति चेत्सत्यम् । लाटानुप्रासे अर्थवद्वर्ण-समुदास्यैव पुनरावृत्तिः, अत्र अर्थवत्समुदास्यानर्थकैकदेशस्याप्यावृत्तेः। न च 'नवपलाश पलाशवनं पुरः' अत्र द्वयोरपि पदयोः सार्थकतया तव युक्तिः बालबोधनप्रभावेति वाच्यम् । सत्यप्यर्थे द्वयो र्भिन्नेऽर्थे स्थितत्वात् । एकस्य पलाशस्य वृक्षविशेषे, अपरस्य पत्रसामान्ये नियतोऽर्थः । लाटानुप्रासे तु द्वयोरपि नयनपदयो र्नेत्ररूपे एव अर्थे स्थितिः । अतः प्रतिपादितम् । 'सति—सम्भवे अर्थे' इति । यमक-विषयं स्फोटयति । यत्र आवृत्तयो र्द्वयोरपि पदयो र्निरर्थकत्वम्, सत्यर्थे भिन्नार्थत्वम्, एकस्य सार्थकत्वम्, अपरस्य निरर्थकत्वम्, तत्र यमकम्, यत्र द्वयोरपि समानार्थकयोस्तात्पर्यमात्रे भेदः, तत्र लाटानुप्रासः । यथास्थितेन—अपरिवर्तितेन क्रमेण, इत्युक्त्या 'दमो मोदः' अत्र तुल्यवर्णमात्रयोरपि पदयोः परिपाटीविपरीतवर्णस्थापनेन न यमकस्या-वकाशः । 'मुख—सन्दंश'—प्रभृतिभेदैर्यमकमेकादशविधम् । क्वचित् वर्णभेदेऽपि यमकत्वस्य न हानिः । तदुक्तम् "यमकादौ भवेदैक्यं डलयो रलयोर्वबोः । शषयोर्नणयोश्चान्ते सविसर्गाऽविसर्गयोः ॥ सबिन्दुकाऽ विन्दुकयोः स्यादभेदप्रकल्पनम् ॥" तेन 'भुजलतां जडतामबलाजनः' अत्र न यमकत्वस्य भङ्गः ।

उदाहरणं दर्शयति—नवपलाशेति । माघे इन्द्रप्रस्थं प्रति प्रस्थितस्य श्री कृष्णस्य मार्गे वसन्तर्तुवर्णने पद्यमिदमुपक्रान्तम् । सः—कृष्णः, पुरः—समक्षं वनमुखे इत्यर्थः । नवपलाशानाम्—नूतनदलानाम्, पलाशानाम्—तदाख्यतरूणाम्, वनं यस्मिन्नृतौ तम्, स्फुटैः—बहुलतया दूरादेव लक्ष्यमाणैः, परागैः—( पुष्प ) रेणुभिः, परागतानि—परिव्या-प्तानि, पङ्कजानि—कमलानि, यत्र तम्, मृदुलाभिः—कोमलाभिः, तान्ताभिः—उष्णिमानं गतैः सूर्यकिरणैः किञ्चित् म्लानाभिः, लताभिः—व्रततीभिः, अन्तम्—मनोहरम् सुमनोभरैः—कुसुमसमुदायैः, सुरभिम्—सुगन्धिमयम्—सुरभिम्—वसन्तम्, अलोकयत्—प्रत्यक्षतया अनुब-

भूव । अत्र वृत्तिप्रदर्शितदिशा 'पलाश-पलाश' इति द्वयोरपि सार्थकयो- र्भिन्नार्थतया, 'परागपराग' इत्यत्र प्रथमपरागस्य सार्थकत्वेऽपि द्वितीयस्य 'परागतेति समुदायान्तर्गतस्य निरर्थकतया, 'लतान्त लतान्त' अत्र प्रथम लतान्तस्य मृदुलघटकलकारेणान्वितस्य निरर्थकत्वेन 'रभिसु रभिसु 'अत्र द्वयोरपि निरर्थकत्वेन क्रमपुरस्सरं पुनरावृत्तितया स्वरव्यञ्जन- समुदायस्य, यमकं नाम शब्दालङ्कारः ।

श्लेषः—

"श्लिष्टैः पदैरनेकार्थाऽभिधानं श्लेष इष्यते ।"

सच वर्णप्रत्ययप्रकृतिपदादिश्लेषाद्बहुविधः । यथा—

"प्रतिकूलतामुपगतेऽहि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पातिष्यतः करसहस्रमपि ॥"

अत्र विधौ इत्यत्र विधु-विधिशब्दयोरुकारेकारयोर्वर्णयोरौकार- रूपत्वाद्वर्णश्लेषः । कर इत्यत्र प्रकृतिश्लेषोऽपि ।

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं सम्प्रतिसममावयोः सदनम् ॥"

अत्र पदश्लेषः ।

श्लिष्टैरिति । श्लिष्टैः—अनेकार्थप्रतिपादकैः, पदैः अनेकार्थानाम्— नैकविधाऽर्थानाम्, अभिधाने—अभिधया साक्षाच्छब्दसम्बन्धेन प्रति- पादने, श्लेषः—श्लिष्यन्ते अर्था अस्मिन्निति श्लेषः । इष्यते—इष्टतया प्रतिपाद्यते साहित्यविद्भिरिति शेषः 'श्लिष्टैः' इति अर्थश्लेषस्य व्यवच्छेदः, तत्र एकार्थेनैव शब्देनानेकार्थप्रतिपादनम् । 'अभिधाने' इति प्रकरणा- दिवशेन एकस्मिन्नर्थे नियमितेऽपि व्यञ्जनया अन्यार्थप्रतिपादकस्य शब्दशक्तिमूलध्वनेर्व्यवच्छेदः ।

ननु एकाधिकप्रतिपादकशब्देन प्रतिपादितस्यानेकस्यार्थस्यैव चमत्कारेण अर्थालङ्कारत्वमेव श्लेषस्य युक्तमिति चेत् । क्षणमालोच्यताम् । अत्र अधिकार्थप्रतिपादने शब्दस्यैव मुख्यता । तादृशशब्दविरहेण नानार्थानां प्रतिपादनेऽसम्भवः । शब्दे सति तदर्थस्य सत्त्वम्, शब्दे परिवर्तिते तस्यासद्भावः । इति शब्दपरिवृत्तिसहिष्णुत्वाभावात् 'यो हि यदन्वयव्यतिरेकी स तदाश्रितः' इत्यलङ्कारशास्त्रे नियमेन श्लिष्टशब्दाभिहितानेकार्थस्य श्लेषस्य शाब्दत्वम् ।

'वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि । श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः ॥' इत्युक्तप्रकारेण श्लेषोऽष्टविधः 'तत्र वर्णप्रकृतिश्लेषमुदाहरति—प्रतिकूलतामिति । प्रतिकूलताम्—अननुकूलताम्, अस्तभावे उदितत्वञ्च, उपगते—प्राप्ते, विधौ—विधातरि, चन्द्रमसि च, बहुसाधनता—नैकविधोपायवत्ता, विफलत्वम्—निरर्थकत्वम्, एति—प्राप्नोति । तदेवोदाहरणेन विवृणुते—पतिष्यतः—अस्तमेष्यत इत्यर्थः । दिनभर्तुः—सूर्य्यस्य, करसहस्रमपि—किरणसहस्रमपि, अवलम्बनाय—पतननिरोधाय, नाऽभूत्—न जातम् । पतन् जनः करद्वयेनाऽपि किञ्चिदवलम्ब्य पतनादात्मानं रक्षति किन्तु प्रतिमुखीभूते विधौ—दैवे—चन्द्रे च सूर्य्यस्य रक्षायै सहस्रं किरणा अपि न प्रभवो बभूवुः । अत्र विधि—विधुशब्दयोः सप्तम्येकवचने 'अच्च घेः' इत्यनुशासनबलेन औकारान्तयोः समानरूपयोः कृतयोर्वर्णश्लेषः । करपदेन हस्तकिरणोभयप्रतिपादने प्रकृतिश्लेषोऽपि ।

पदश्लेषं दृष्टान्तेन विशिनष्टि—पृथुकेति । कस्यचन निर्धनकवेः कञ्चननृपं प्रति उभयसंलग्नविशेषणेयमुक्तिः । हे देव, आवयोः—मम भवतश्च, सदनम्—कुटीरः प्रासादश्च, समम्—तुल्यरूपम्, जातम् । समतामेव श्लेषमुखेन प्रतिपादयति—राजगृहे सम्पदोऽनिर्वचनीयतया पृथूनि—विशालाकृतीनि, कार्तस्वरपात्राणि—स्वर्णनिर्मितभाजनानि, यस्मिन् तत् । अन्यत्र निर्धनगृहे पृथुकानाम्—बालानाम्, आर्तस्वरस्य—क्षुधातुरतया करुणक्रन्दनस्य, पात्रम्—स्थानम् । एकत्र भूषिताः—अलङ्का-

रादिभिः सम्पूजिताः, निःशेषाः—समस्ताः, परिजनाः—परिवाराः, यत्र तत्। अन्यत्र भुवि—भूमौ, उषिता—शय्याऽभावेन शयिताः सकल परिवाराः यत्र तत्। हर्म्यपक्षे विलसद्भिः—सविलासं परिभ्रमद्भिः, करेणुभिः—हस्तिभिः, गहनम्—निबिडमभिव्याप्तम्, कुटीरपक्षे बिले (बवयोरभेदः)—छिद्रे, सीदन्ति—इति विलसत्काः—मूषकाः (स्वार्थे कन्) तेषां रेणुभिः, गहनम्—निबिडम्। अतो भवता दानेन मम-गृहस्य निजगृहसाम्यमपाकरणीयम्। नहि त्वादृशो भूपति र्निजसमता-मन्यकृतां सहते अत्र पदानां समासघटकानां श्लेषो वृतः।

अथ अर्थालङ्काराः—

शब्दनिष्ठानलङ्कारान्प्रदर्श्य सम्प्रति अर्थनिष्ठान् विवेचयति—

अर्थालङ्काराः—स्वभावोक्तिरुपमादयश्च। तत्र स्वभावोक्ति-र्वस्तुस्वभाववर्णनस्वरूपत्वात् स्वभाववर्णनञ्च वस्तूनां प्रकृतञ्चेत्त-द्वस्तूनि प्रत्यक्षमिव दर्शयित्वा सहृदयमनांसि नितरामाकर्षतीति तस्य अतीव चमत्कारित्वात्तामेत्र प्रथममाह—

"स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्।"

यथा अभिज्ञानशकुन्तले—

"ग्रीवाभङ्गाऽभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥"

यथा वा—तत्रैव पञ्चमाङ्कादौ कञ्चुकिनो जरावर्णनम्। तत्रैव च सप्तमे नृपशिशोः सिंहशावकास्कन्दनविक्रान्तिवर्णनम्।

अर्थालङ्काराः-शब्दाश्रिता अपि शब्दानां परिवृत्तिसहिष्णुत्वभावादर्थे

एव चमत्कारित्वादर्थनिष्ठाः । स्वभावोक्तिः—वस्तुप्रकृति-चित्रणम्, उपमादयः-वस्तूत्कर्षशोधनाय विशिष्टवस्तुसाम्यैकरूपतादिव्यञ्जकवाग्भङ्गयः । स्वभावस्य—वर्णनीयवस्तुगतस्य प्रकृतिसिद्धस्य धर्मस्योक्तिः,स्वभावोक्तिः। अत्र चमत्कारः प्रस्तुतवस्तुनो यथावत् प्रकृतेश्चित्रणेन 'शुष्केन्धनमिवानलः' चेतः प्रसादयति । यथा काव्ये चित्रगीये क्रुद्धे जने यादृशं निःश्वास-भृकुटिमुखवैवर्ण्यादिचित्रणं चमत्कारं पुष्णाति न तथा 'भीम इव कुपितः' इत्यादि उपमादि । एवमुपनिषद्रामायणप्रभृतिप्रथमकाव्य-प्रसिद्धाया अस्याश्चमत्कारशालित्वे तामेव प्रथमं निरूपयति ।

स्वभावोक्तिरिति । यथावत्—नातिन्यूनाऽऽधिक्येन,चारु —सुन्दरम्-सहृदयहृदयावर्जकम्, वस्तुनः—वर्णनीयप्रकृतविषयस्य, वर्णनम्—कविदृशा शब्दार्थद्वारा असाधारणस्य धर्मस्य चित्रणम्, स्वभावोक्तिः। वस्तुवर्णनं चमत्कृतिहेतुभूतमेव अस्या विषयः । तेन "गोरपत्यं बलीवर्दः तृणमत्ति मुखेन सः ।" इति चमत्कारशून्यं ग्राम्यं छन्दोबन्धनं न स्वभावोक्तिः ।

शाकुन्तलस्यपद्यमुदाहरणरूपेनावतारयति ग्रीवाभङ्गेति । मृगयायै मृगमनुधावमानस्य दुष्यन्तस्येयमुक्तिः । अनुपतति—अनुधावमाने स्यन्दने—अश्वरथे, ग्रीवायाः—पश्चाद्दर्शने मोडनीयस्य गलभागस्य, भङ्गेन—पश्चात्करणरूपेण वक्रिम्णा, अभिरामम्—मनोज्ञम्, यथा तथा, मुहुः—पुनः पुनः, दत्तदृष्टिः—लग्ननयनः; शरपतनभयात्—नृपकर्तृकबाणाघातभीत्या, भूयसा—बहुलेन, पश्चार्द्धेन—पुच्छभागेन, पूर्वकायम्—कायस्य पूर्वीयं शिरोभागमित्यर्थः । प्रविष्टः ( समस्त-शरीरमभिसन्धाय प्रक्षिप्तस्य शरस्य लक्ष्यभ्रंशाय एकत्रीकृतचतुश्चरणतया सङ्कुचितशरीरः ) अर्धं—न तु निःशेषम्, अवलीढैः—चर्वितैः, श्रमेण—धावनजन्यायासेन, विवृतात्—उद्घाटितात्, मुखात् भ्रंशितुं—पतितुं शीलं येषां तैः, शष्पैः—तृणकवलैः, कीर्णवर्त्मा—आच्छादितमार्गः, ( अयं मृगः ) उदग्रप्लुतत्वात्—अतिशयोत्प्लवनात्, शरसन्धानिनः पुंसो दृष्टेः पारमासादयितुमिति भावः । वियति—आकाशे, बहुतरम्,

उर्व्याम्—भूमौ, स्तोकम्—अल्पकालम्, प्रयाति—धावति । इति पश्य । वाक्यं कर्म । स्रग्धरावृत्तम् । अत्र राज्ञाऽनुधावितस्य मृगस्य भयात्पलायने स्वाभाविकानि ग्रीवाभङ्गशष्पपतनादिचित्राणि किमिव सहृदयान् चमत्कुर्वाणानि स्वभावोक्तेः सारवत्तां स्थापयन्तीति काव्यमर्मज्ञैरेवाऽवगम्यम् । उदाहरणाऽन्तरं पुनस्तत्रैव—शाकुन्तले पञ्चमेऽङ्के कञ्चुकिनो जराजन्यवैक्लव्यवर्णने यथा—"आचार इत्यवहितेन मया गृहीता या वेत्रयष्टिरवरोधगृहेषु राज्ञः। काले गते बहुतिथे मम सैव जाता प्रस्थानविक्लवगतेरवलम्बनार्था ॥" अत्र यष्टेरवलम्बनार्थत्वं कियदुपयुक्तमिति धृतलगुडः सितश्मश्रुः कश्चन प्रवया एव प्रष्टव्यः । एवं तत्रैव सप्तमेऽङ्के दुष्यन्तसूनो भरतस्य केसरिशावके सावज्ञं स्पर्श—ताडनादिव्यवहारस्तादृशो वीरजन्मनो नितरां स्वाभाविकः संवृत्तः । तस्य बालोचितदर्पोक्तौ—'जृम्भस्व सिंह । दन्तांस्ते गणयिष्ये' अत्र कियान् मनोमुग्धकरश्चमत्कारः !

उपमा—

सम्प्रति अर्थालङ्काराणां बीजभूतायाः परमचमत्कारिण्या उपमायाः ( तदुक्तम्—उपमैका शैलूषी, सम्प्राप्ता चित्रभूमिकाभेदान् । रञ्जयति-काव्यरङ्गे नृत्यन्ती तद्विदां चेतः" ) स्वरूपं निरूपयितुं दण्डिनः काव्यादर्शात् कारिकामवतारयति—

"प्रस्फुटं सुन्दरं साम्यमुपमेत्यभिधीयते ।"

प्रस्फुटमिति रूपकादे र्गम्यसाम्याद्भेदाय । सुन्दरं--वैचित्र्य-जनकं, तेन 'गौरिव गवयः' इत्यत्र नायमलङ्कारः । साम्यं--सादृश्यम् ; साम्यञ्च---क्रियागतं, गुणगतम्, उभयगतञ्चेति त्रिविधम् । क्रमेणोदाहरणानि ।

प्रस्फुटम्—व्यक्तम्, वाच्यमिति यावत् नतु रूपकाऽतिशयोक्ति प्रभृतिवदाक्षिप्तमित्यर्थः । सुन्दरम्—चमत्कारि, साम्यम्—उपमानोप-

मेययोः गुणक्रियारूपं सादृश्यम् यत्र सा उपमा—उप—समीपे, मीयते-तुल्यते उपमानेन उपमेयम् अनया, इत्युपमा नामाऽलङ्कार उच्यते। उपमानोपमेययोः केनचित् समानधर्मेण वाच्यं सादृश्यम् उपमाऽलङ्कारस्य विषयः। उपमीयते अनेन इत्युपमानम्, सादृश्यप्रतियोगि; तद्धर्मतया प्रसिद्धो वा विषय उपमानम्। उपमीयते यत्तदुपमेयम्, सादृश्यानुयोगि; तद्धर्मतया निरूपणीयो वा विषयः, उपमेयम्। समानधर्मः—उपमानोपमेयगतः साधारणो धर्मः। वाच्यम् वाचा इवयथादि शब्देन प्रतिपाद्यम्, सादृश्यम्। यथा—'कमलमिव कोमलं मुखम्' अत्र कोमलतया प्रसिद्धं कमलम् उपमानम्। कोमलतया वर्णनीयं वदनम्, उपमेयम्। द्वयोः समानतया विद्यमानो धर्मः कोमलता। ततः सिद्धं सादृश्यमिवपदेन स्फुटमित्यत उपमा।

प्रस्फुटमिति। रूपके उपमानोपमेययोरभेदेन अभेदप्रतिपादकस्य साधारणधर्मस्य प्रतीयमानत्वम्; इह च इवादिशब्देन तस्य वाच्यत्वम्। एवमपह्नुत्यादावपि। इत्यत आह रूपकाऽपह्नुतिदीपकादेः साम्यं गम्यम्, ततो भेदाय--विलक्षणताप्रदर्शनाय। सुन्दरम्, चमत्कारशालि; एतदभावे 'गौरिव गवयः' 'रज्जुरिव पुच्छम्' इत्यादावप्यलङ्कारत्वं प्रसज्यते। साम्यम्—सादृश्यम्—तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् कमलान्मुखस्य भिन्नता, किन्तु कमलगत कोमलताधर्मवत् मुखम्, इत्यनयोः सादृश्यम्। तद्भिन्नत्वे सति कोमलताधर्मवत् इत्यभावे 'भीम इव भीमः' इहान्वयाऽलङ्कारेऽतिव्याप्तिः, अलक्ष्ये लक्षणस्य प्रवृत्तेः।

क्रियादिगतस्य त्रिविधस्य साम्यस्य क्रमेणोदाहरणं प्रदर्शयति—

"क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः॥

अत्र 'आयाति' लङ्घ्यते' इति च क्रियागतस्य उपमेये उपमाने च साम्यम्।

जरतः—वृद्धस्य, मतिः—प्रज्ञा, क्षणात्—एकस्मिन् क्षणे, प्रबोधम्—ज्ञानम्, अन्यत्र प्राकाश्यं ज्योतिरिति यावत्, आयाति—प्राप्नोति, पुनः—द्वितीयस्मिन्नेव क्षणे, तमसा—अज्ञानेन, अन्यत्र अन्धकारेण च, लङ्घ्यते—स्ववशमानीयते, आच्छाद्यते इत्यर्थः। (अतः सा जरतो मतिः) निर्वास्यतः—मुहूर्तात्परमेव निर्वाणं प्राप्स्यतः, प्रदीपस्य शिखा—उपरिगता ज्वलद्वर्तिः, इव। इदं मनोहारि निरतिशयचमत्कारिपद्यं शाकुन्तले कञ्चुकिमुखेन निर्गतम् 'उपमा कालिदासस्य' इति सुप्रमाणयति। अत्र उपमानभूतया दीपशिखया सह उपमेयाया जरन्मतेः प्रबोधप्राप्ति-तमोग्यास्त्वरूपेण साधारणेन क्रियागतेन धर्मेण सादृश्यमिति क्रियागतं साम्यम्।

गुणगतमुदाहरति—

"हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाऽम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि॥"

अत्र परिलुप्तधैर्यत्वं गुण उभयत्राऽपि समानः।

कुमारसम्भवे मनोभवजनितविकारमनुभवतः शिवस्य पार्वतीमनुलक्ष्य चेष्टां पद्येनानेन प्रकाशयति। हरस्तु—शिवोऽपि, अप्यर्थकेन 'तु' पदेन कामदेवस्य 'कुर्यां हरस्याऽपि पिनाकपाणे धैर्यच्युतिम्…' इति प्रतिश्रुतिर्दृढीभूता। चन्द्रोदयारम्भे—किञ्चिदुदयति चन्द्रमसि, अम्बुराशिरिव—समुद्र इव, तादृग् गम्भीरः सन्नपीति भावः, किञ्चित्—न तु जनसामान्यवदाकण्ठम्, परिलुप्तम्—विलीनम्, धैर्यम्—इन्द्रियनिग्राहिणी धीरता यस्य तादृशः सन् (चन्द्रोदये निधिरुद्वेलतीति वैज्ञानिकः सिद्धान्तः।) बिम्बफलवत् अधरोष्ठम्—दन्तच्छदौ यस्मिन् तस्मिन् (प्राण्यङ्गत्वादेकवद्भावः) उमामुखे—पार्वतीवदने विलोचनानि—अतृप्ततयाऽनेकत्वमुपगतानि, नेत्राणि, व्यापारयासास—सञ्चालयामास। सस्नेहं तस्या मुखं नयनैः पातुं प्रववृते इति भावः। अत्र उपमानोपमेययोः सागरशिवयोः

परिलुप्तधैर्यंस्वरूपो गुणः साधारणः, अतो गुणगतमिह साम्यम् । वृत्तमुपजातिः ।

उभयगतं—गुणक्रियागतं—ब्रवीति—

"स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ।"

रामं सस्नेहं वीक्षमाणां सीतां प्रति वयस्याया उक्तिरियम् । स्नेहनिष्यन्दिनी—प्रेमवर्षिणी, धवला—स्वच्छा, चाऽसौ बहलमुग्धा—सातिशयमनोरमा, ते—तव, दृष्टिः, दुग्धकुल्या—क्षीरधारा, इव हृदयेशं—कान्तम्, स्नपयति—स्नानैः शिशिरयति । अत्र दुग्धकुल्यायाः दृष्टेश्च स्नपनक्रियया धवलबहलमुग्धतागुणेन च साम्यम् । अतोऽत्र गुणक्रियोभयगतं सादृश्यं ज्ञेयम् ।

मालावदुपमाया ग्रथितत्वेन समधिकचमत्कारवत्तया मालोपमामाह—

"मालोपमा यदेकस्योपमानं बहु दृश्यते ।"

( विश्वनाथः )

यथा—

"प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरामनीषी तया स पूतश्च विभूषितश्च ॥"

( कुमारसम्भवम् )

यत्—यतः, एकस्य—उपमेयस्येत्यर्थः, बहु—अनेकम्, उपमानम्—सादृश्यप्रतियोगि, दृश्यते—निबद्ध्यते, ततः इयं मालावन्निबद्धतया मालोपमा, भवति । यथा—प्रभेति । कुमारसम्भवे पार्वतीसदृशीं पुत्रीं प्राप्तवतो हिमवतो महतः सौभाग्यस्य वर्णनम् । प्रभया—दीप्त्या ( हेतुना ) महत्या—उत्कृष्टया, शिखया—ज्वलद्वर्तिकया दीप इव । त्रयो मार्गा यस्यास्तया ( मन्दाकिन्यास्त्रिलोकीव्याप्तत्वात् ) त्रिदिवस्य—

स्वर्गस्य मार्गः—पन्थाः, आकाशमिति यावत् स इव । संस्कारः—व्याकरणकोषसाहित्यनियमेन शुद्धता, तद्वत्या गिरा—वाचा, मनीषी—विद्वान्, इव स हिमवान् तया—पुण्या पार्वत्या, पूतः-पवित्रीकृतः, विभूषितः—अलङ्कृतश्च । अत्र एकस्यैव पार्वत्या विभूषितस्य हिमवत उपमेयभूतस्य शिखासङ्गतदीपादिभिः क्रियद्भिरुपमानैः साम्यमतो मालोपमा ।

रूपकम्—

"तद्रूपकमभेदो य उपमानोपमेययोः।"

(मम्मटः)

उपमानं चन्द्रादि, उपमेयं मुखादि । प्रकाशितविभिन्न-स्वरूपयोरपि उपमानोपमेययोरतिसाम्यप्रदर्शनाय काल्पनिकोऽभेदारोपो रूपकमित्यर्थः । यथा—

"पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥"

(कुमारस०)

अत्र लतासु वधूनां, पुष्पस्तवकादिषु स्तनादीनामभेदारोपः ।

उपमानस्य—साधर्म्येण प्रसिद्धस्य चन्द्रादेः, उपमेयस्य—साधर्म्येण वर्णनीयस्य मुखादेः, यः अभेदः—अवैधर्म्यम् तस्यारोप इति यावत्, एकरूपतयाऽवस्थापनमित्यर्थः । सः—रूपयति—उपमानोपमेययोरेकत्वेनाव-स्थापयतीति रूपकम्, तन्नामाऽलङ्कारः । अभेदस्यारोपो भेदे एव सम्भवति। अतः, प्रकाशितम्—(अपह्नुतिवारणाय) उल्लिखितम्, विभिन्नम्—(अतिशयोक्तिवारणाय) भेदयुक्तम्, स्वरूपं ययोस्तयोः, उपमानोप-मेययोः—कमलमुखयोः, अतिसाम्यस्य—सातिशयसादृश्यस्य प्रदर्शनाय

काल्पनिकः—न तु वास्तविकः, अभेदारोपः—भेदप्रतीतिस्थगनम्, रूपकम् ।

तथाहि—पर्याप्तेति । कुमारसम्भवे शिवमभिलक्ष्य प्रस्थिते मदने-ऽसामयिकवसन्तप्रादुर्भावे स्थावरेऽपि मदनोद्रेकं प्रदर्शयति । पर्याप्ताः—पूर्णतां गताः, पुष्पस्तवकाः—प्रसूनगुच्छकाः, एव स्तनाः—कुचाः, यासां ताभ्यः, स्फुरद्भिः—( स्थितिप्रदर्शनानुकूलं ) किञ्चिच्चलद्भिः, प्रवालैः—पल्लवैः, एव ओष्ठैः—रदनच्छदैः, मनोहराभ्यः—चुम्बनीयशो-भाभ्यः, लता एव बध्वस्ताभ्यः, तरवः—वृक्षाः, अपि, विनम्राः—आलिङ्गन-प्रदानाय नताः, शाखा एव भुजाः, तेषां बन्धनानि—आश्लेषनिमि-त्तकानि वेष्टनानि, अवापुः—प्राप्तवन्तः, अत्र लतासु वधूनां, पुष्पस्तवकेषु स्तनानां, प्रवालेषु ओष्ठानाम्, सादृश्यातिशयप्रकाशनाय भेदस्थगनार्थ-मारोपः । अत इह उपमेयेषु उपमानानां निरूपणात् रूपकम् ।

उत्प्रेक्षा—

"सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।"

( दण्डी )

प्रकृतस्य—उपमेयस्य, समेन—उपमानेन, सम्भावनञ्च उत्कट-कोटिकः संशयः । अप्रस्तुतकोटेरुत्कटत्वञ्च प्रस्तुतकोटे र्निगरणेन जायते, निगरणञ्च प्रस्तुतस्य क्वचिदनुपादानेन क्वचिदुपात्तस्याप्यधः करणेन भवति । यदुक्तम्—

"विषयस्यानुपादानेऽप्युपादाने च सूरयः ।
अधः करणमात्रेण निगीर्णत्वं प्रचक्षते ॥"

( दण्डी )

विषयः प्रस्तुतम् ।

प्रकृतस्य—वर्णनीयस्य, उपमेयस्येत्यर्थः । समेन—समानधर्मतया ऽसिद्धेन उपमानेन सह तादात्म्येनेति शेषः । सम्भावनम्—कल्पनम्,

उत्प्रेक्षा—उत्—उत्कटा, प्र—प्रकृष्टा चमत्कारवतीत्यर्थः, ईक्षा—तादात्म्ये-नोपमेयस्योपमाने ज्ञानमुत्प्रेक्षा । समयति—आत्मना सह उपमेयं समीकरोतीति समः, तेन उपमानेनेत्यर्थः । संशयः—अन्यस्मिन् वस्तुनि अन्यस्यावभासः, द्विविधः । तुल्यकोटिकः, उत्कटकोटिकश्च । तुल्या—द्वयोरुपादानेन निर्णयाभावात् ( सन्देहस्य ) निषेध-स्वीकारान्यतरेणापि वक्तुमशक्या, कोटिः—सन्देहपरम्परा, यत्र, सः । अयं सन्देहस्य विषयः । उत्कटकोटिकः,—उत्कटा—प्रकृतविषयाद् विशिष्टा, कोटि र्यत्र तादृशः, सम्भावनशब्देनाभिधीयते । यत्र संशयस्य उत्कटता—प्रस्तुतकोटेः वर्णनीयविषयस्योपमेयस्य उपमानद्वारा निगरणम्—सर्वथा च्छादनम्, तत्र ' उत्प्रेक्षा ' । यथा ' मुखं चन्द्रं मन्ये ' अत्र प्रस्तुतस्य मुखस्य उपमेयेन चन्द्रेण तिरस्करणं संवृत्तम्, अतो मुखस्य चन्द्रेण सम्भावनम् उत्प्रेक्षानिमित्तकम् ।

निगरणमपि द्वाभ्यां विधाभ्यां सम्पद्यते । एकं प्रस्तुतस्य अनुपा-दानेन—अग्रहणेन, अपरम् उपात्तस्य—गृहीतस्यापि, अधः करणेन—तिरस्करणेन । तदेव प्रथयति—विषयस्येति । विषयस्य—प्रस्तुतस्य, अनुपादाने—अग्रहणे, उपादाने—ग्रहणे च, अधः करणेन—अन्यथा परिकल्पिततया तिरस्करणमात्रविशेषेण, सूरयः—विद्वांसः, निगीर्णत्वम्—निगलितस्वरूपत्वम्, विशदयन्ति ।

अनुपात्तविषयाया उपात्तविषयायाश्चोत्प्रेक्षायाः क्रमश उदाहरणे प्रस्तूयेते—

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥"

( मृच्छकटिकम् )

अत्र तमसः प्रसरसम्पातादिविषयो नोपात्तः ।

"समय स वर्तत इवैष यत्र मां
समनन्दयत् सुमुखि ! गौतमाऽर्पितः ।

अयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥"
( उत्तरचरितम् )

अत्र विषयः कर उपात्तोऽपि मूर्तिमन्महोत्सवरूपेणाऽधः कृतः ।

"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥"

शूद्रकरचितमृच्छकटिकनाटके रात्र्यन्धकारवर्णनप्रसङ्गे निबद्धमिदम् । लिम्पतीति । तमः—अन्धकारः, अतिप्रसरणशीलत्वात् अङ्गानि—गात्राणि, लिम्पति—लिप्तानि विधत्ते, इव । नभः—आकाशम्, अञ्जनम्—कज्जलम्, वर्षति, इव । दृष्टिः—विलोकनशक्तिः, असत्पुरुषसेवा—नीचजनाराधनम्, इव निष्फलताम्—विषयग्रहणाभावाद्वैयर्थ्यम्, गता । इह तमो व्याप्नोतीति प्रकृते तदनुपादानेन उपमानस्य लिम्पनस्य, एवं प्रसरतीति प्रवृत्ते वर्षस्य च सम्भावनमत अनुपात्तविषया—अनुल्लिखित-प्रकृतवस्तुः, उत्प्रेक्षा नामालङ्कारः । उत्तरार्द्धमुपमाऽलङ्कारस्य विषयस्तदत्र नोपयुज्यते, इति बोद्धयम् ।

समय इति । उत्तरचरिते चित्रदर्शनावसरे स्मृतपूर्वसुखस्य रामस्य सीतां प्रति वचनम् । हे सुमुखि ! सुन्दरि ! एषः—चित्रप्रदर्शितः, समयः—परिणयकालः, वर्तते इव—चित्रदर्शनात्स्मृतेजागर्त्या प्रत्यक्षं विद्यते इव । यत्र समये, आगृहीतम्—परिहितम्, कमनीयम्—मनोज्ञम्, कङ्कणम्—हस्ताभूषणम्, येन सः, गौतमेन—शतानन्दपुरोधसा, अर्पितः—प्रदत्तः, मूर्तिमान्—शरीरी, महोत्सव इव ते तव करः—हस्तः, माम् आनन्दयत्—अतूतुषत् । अत्र प्रस्तुतस्य भूतकालविषयस्य वर्तमानत्वेन सम्भावनम्, एवं करस्य उपमेयस्य, उपादानपूर्वकम् उपमानेन महोत्सवेनाधःकरणमिति उपात्तविषयोत्प्रेक्षा ।

अथ अतिशयोक्तेरुत्प्रेक्षायाः स्फुटं भेदप्रदर्शनाय अध्यवसायस्य साध्यत्वस्य सिद्धये 'मन्ये'—प्रभृतिशब्दा उत्प्रेक्षाव्यक्तये प्रयुज्यन्ते। तदेव कारिकया प्रथयति—'मन्ये' इति। आदिशब्देन 'जाने' इत्यादीनां तुल्यार्थकानां ग्रहणम्। एभिः, उत्प्रेक्षा व्यज्यते—स्फुटं प्रतीयते। इव शब्दोऽपि तादृशः, उत्प्रेक्षाव्यञ्जक इति भावः। इव शब्दो यद्यप्युपमाया बोधकः। किन्तु असम्भविनि उपमाकल्पे स्थले उत्प्रेक्षाया व्यञ्जकः, न तु वाचकः। साम्यस्य गम्यमानत्वात्।

अतिशयोक्तिः—

"सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते।"

(विश्वनाथः)

प्रकृतस्य निगरणेनाऽभेदज्ञानमप्रकृतस्य अध्यवसायः, तस्य च उत्प्रेक्षायामप्रस्तुतस्याऽनिश्चितत्वेन निर्देशात् साध्यत्वम्; इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वमनयोर्भेदः। निगरणत्वञ्च उभयत्राऽपि समानमेव।

अध्यवसायस्य—विषयनिगरणेन विषयिणोऽभेदप्रतिपत्तेः, सिद्धत्वे—निश्चयेन निष्पत्तौ, अतिशया—लोकोत्तरा, उक्तिः—अभिधानप्रकारः, अतिशयोक्तिः, निगद्यते—प्रपिपाद्यते, बुधैरिति शेषः।

अध्यवसीयते—अभेदज्ञानाय प्रकृतेऽप्रकृतं स्थाप्यते इत्यध्यवसायः। एवं प्रकृतस्य—प्रस्तुतविषयस्य मुखादेः, निगरणेन—(अप्रकृतेन चन्द्रादिना) तिरस्करणेन, अप्रकृतस्य—उपमानतया वर्णितस्य विषयस्य अभेदज्ञानम्—एकरूपतया बोधः, अध्यवसायः। तत्र 'मुखं चन्द्रं मन्ये' अत्र मुखे चन्द्रस्य (मन्ये—उत्प्रेक्षे, न तु निश्चित्य जाने) इत्यनिश्चितत्वेन निर्देशात् अध्यवसायस्य साध्यत्वम् अयमुत्प्रेक्षाया विषयः। किन्तु 'मुखं शोभते' इति वक्तव्ये 'चन्द्रः शोभते' इति मुखस्य

चन्द्रद्वारा निश्चित्य तिरस्कारेण अध्यवसायस्य सिद्धत्वमतोऽयमतिशयोक्ते र्विषयः । उत्प्रेक्षायां निगीर्यमाणस्यापि अध्यवसानसमये ज्ञानं ततः साध्यत्वम् । अत्र तु निगलितस्य सर्वथाऽप्रतीतिरिति सिद्धत्वम् । अत्र मुखादेः चन्द्रादावध्यवसानात् मुखादेः ( मनोज्ञत्वादिसाधर्म्ये ) अतिशयः प्रतीयते, इत्यतिशयोक्तिरन्वर्था ।

उदाहरणमधः प्रस्तौति—

"अकालजलदावली किरतु नाम मुक्तावली-<br>रपर्वणि विधुन्तुदस्तुदतु हन्त ! शीतद्युतिम् ।<br>इदन्तु महदद्भुतं यदनपायि विद्युल्लताऽ-<br>वलम्बि कनकाचलद्वयमधोमुखं नृत्यति ॥"

अत्र केशादे र्जलदावल्यादिरूपेणाध्यवसानम् ।

यथा वा—

"दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा<br>धीरोद्धता नमयतीव गतिर्धरित्रीम् ।<br>कौमारकेऽपि गिरिवद्गुरुतां दधानो<br>वीरो रसः किमयमेत्युत दर्प एव ॥"

अत्र कुशस्य वीररसरूपेण दर्परूपेण चाध्यवसानम् । प्रथमे विषयः केशादि र्नोपात्तः, द्वितीये अयम्' इत्यनेनोपात्तोऽप्यधः कृतः ।

अकालेति । 'पृथ्वी' वृत्तौ, सातिशयसाम्यप्रतीतये उपमानेन जलदादिना उपमेयस्य केशादेर्निगीर्णत्वं प्रकटयन् नायिकासौन्दर्यस्य लोकातीतत्व वर्णयितुमुपक्रमते—अकाले—अनवसरे, जलदावली—मेघसमूहः, मुक्तावलीः—मौक्तिकपुञ्जान् , किरतु—वर्षतु, नाम ( सम्भावनायाम् ) । विधुन्तुदः—राहुः, अपर्वणि ग्रहणनियुक्तपौर्णमासीव्यति-

रिक्ते तिथौ, हन्त! ( खेदे ) शीतद्युतिम्—चन्द्रम्, तुदतु—ग्रहणेन तापयतु; तु किन्तु अनपायिनीम्—अविनश्वराम् स्थिरामिति यावत्। विद्युल्लताम्—तडिद्वल्लीम्, अवलम्बितुं शीलं यस्य तत्, कनकाचल-द्वयम्—सौवर्णगिरियुगलम्, अधोमुखम्—निम्नाननम्, सत् नृत्यति—खेलतीति विचित्रमिति भावः। अत्र तरुण्या अवयवानां केश-मुख-हार-पयोधराणामनुपादाने साध्यत्वप्रतिपादकशब्दमन्तरेण चाध्यवसायस्य सिद्धत्वादतिशयोक्तिः। साम्यातिशयप्रतिपादनरूपं प्रयोजनम् सा च विष-याऽननुपादानेन अनुपात्तविषया।

उदाहरणान्तरं 'वसन्ततिलक' निबद्धमुत्तररचरितपद्यं कुशागमन-प्रसङ्गगतं कुशस्य वीररसाध्यवसितत्वेन सिद्धाऽध्यवसायतया समुल्लि-खति—दृष्टिरिति। अस्य कुशस्येत्यर्थः। दृष्टिः तृणीकृतः—तृणवत्तुच्छतया गणितः, जगत्त्रयस्य सत्त्वसारः—बलोत्कर्षः, यया सा। धीरा—अचपला, ( किन्तु ) उद्धता—स्फुरद्गर्वा, गतिः—गमनक्रमः, धरित्रीम्—पृथ्वीम्, नमयतीव—भारातिशयेन निम्नां कुर्वतीव। अयम्—प्रत्यक्षं दृश्यमानः, कौमारके—शैशवेऽपि, गिरिवत्—पर्वतस्येव, गुरुताम्—गौरवं दधानः, वीरो रसः, एति—अत्र समायाति? उत ( वितर्के ) अथवा दर्पः—गर्वः, एव आयाति? अत्र कुशे प्रस्तुते अप्रस्तुतस्य वीरस्य दर्पस्य चाध्यवसानेन अयमिति पदोपादानेन उपात्तविषयातिशयोक्तिः।

अत्र पूर्वार्द्धे 'नमयतीव' साध्याध्यवसाने उत्प्रेक्षैव। परतो वीरे दर्पे चाऽध्यवसितेऽपि किमिति पदोपादानेन सन्देहोऽपि सङ्कलितः। अतः शुद्धमुदाहरणं पूर्वप्रदर्शितमेव।

पुनरतिशयोक्तेर्भेदान्तरं कल्पयति।

"प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ प्रकल्पनम्।
कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः॥
विज्ञेयाऽतिशयोक्तिः सा" ऽप्यन्यैव प्रथमोक्ततः॥

( मम्मटः )

प्रस्तुतस्य – प्रकृतस्य वर्णनीयस्येत्यर्थः, यत् अन्यत्वम्—तदन्यप्रकारेण वर्णनम्; एवं यद्यर्थोक्तौ सम्भावनार्थक 'यदिचेत् प्रभृतिशब्दप्रयोगे, यत् कल्पनम्—असम्भाव्यार्थस्य निबन्धनम्; कार्य्यकारणयोः—निमित्तनैमित्तिकयोः, पौर्वापर्यस्य—'कार्यनियतपूर्ववृत्ति कारणम्' 'कारणपरवृत्तिकार्य्यम्' इति पूर्वापरीभावस्य, विपर्ययः—क्रमलङ्घनम्, कार्यस्य पूर्वमेव एककालावच्छेदेन वा निबन्धनेन, नियतक्रमत्यागः, इत्येवंरूपा अतिशयोक्तिः, प्रथमोक्ततः—'सिद्धत्वेऽध्यवस्याऽतिशयोक्तिर्निगद्यते' इति सामान्यत उक्तात् अन्यैव। अन्यत्वप्रकल्पने यद्यर्थकल्पने हेतुकार्यक्रमविपर्यये च स्फुटैव तावन्मात्रनिष्ठैव विच्छित्तिः। वस्तुतः सर्वत्राप्यध्यवसायसिद्धता यथाकथञ्चिदस्त्येव।

अधस्तनयोः पद्ययोः प्रस्तुतान्यत्वप्रकल्पनम् असम्भववस्तुकल्पनञ्च यदिशब्दमूलकं क्रमशः प्रदर्शयति—

"अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः।
तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम्॥"

यदि शब्देन तात्पर्यायान्तरेण वा यद्यर्थस्य कथनेऽसम्भविनोऽर्थस्य कल्पनामित्यर्थः। तद्यथा—

"पुष्पं प्रवालोपहितं यदि स्या-
न्मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद्विशदस्य तस्या-
स्ताम्रौष्ठपर्यस्तरुचः स्मितस्य॥"

अन्यदिति। पद्मपलाशवत्—कमल-दलवत्, अक्षिणी—नेत्रे, यस्यास्तस्याः, तस्याः—सुन्दर्याः, अङ्गलावण्यम्—अवयवकमनीयता, अन्यत्—पृथक् एव, सौरभसम्पदः—पद्मिनीत्वेन सुगन्धिसम्पत्तयः, अथवा सौरभशब्दो गुणवाची ततः—गुणश्रिय इत्यर्थः। अन्याः—अपूर्वा

एवेत्यर्थः। तथा सरसत्वम्—रसिकता, अलौकिकम्—लोकोत्तरम्। अत्र प्रस्तुतानाम् अङ्गलावण्यसौरभसम्पत्सरसत्वादीनामन्यत्वेन कल्पनया प्रस्तुताऽन्यत्वप्रकल्पनरूपाऽतिशयोक्तिः।

यत्र असम्भविनः प्रकृतिप्रतिकूलस्य वस्तुनो यदि पदेन तदर्थकेन चेत्प्रभृतिशब्देन च कल्पनं सम्भवितया प्रतिपादनं तत्रापि अतिशयोक्तिः। यथा चन्द्रमसो भूमाववतारः प्रकृत्यप्रसिद्धः किन्तु यत्र 'यदिदं त्वया सम्पादितं तदा भूतले चन्द्रस्यावतारः स्यात्' इत्येवं कल्प्यते तत्रेयमिति बोध्यम्। उदाहरति—पुष्पमिति। कुमारसम्भवे पार्वत्याः स्मितवर्णने उपक्रान्तमिदं पद्यम्। यदि पुष्पम्—प्रसूनम्, प्रवाले—नवकिशलये, उपहितम्—लग्नं स्थितमित्यर्थः स्यात्। मुक्ताफलम्-मौक्तिकम्, वा—अथवा, स्फुटे—निर्मले, विद्रुमे—प्रवाले, स्थितं स्यात्। तदा, ताम्रयोः—रक्तयोः, ओष्ठयोः प्रर्यस्ता—प्रसृता, रुक्—कान्तिः, यस्य तस्य, विशदस्य—स्वच्छस्य, स्मितस्य—ईषद्धासस्य, अनुकुर्यात्—साम्यमुपेयात्। अन्यथा नैव कथमपि सम्भव इति भावः। ओष्ठो रक्तः, तत्र परिगतः समुज्ज्वलो हासः, रक्ते पल्लवे स्थितेन शुभ्रपुष्पेण वा रक्ते प्रवाले निचिते स्वच्छमौक्तिकेन वा समीकृतः। अत्र यदि पुष्पं प्रवालोपहितं स्यात् ओष्ठप्रसृतस्मितम् ( अननुकरणीयशोभमिति तत्त्वम् ) अनुकृतं स्यादिति यद्यर्थप्रकल्पनमसम्भविनोऽर्थस्य सुस्पष्टम्।

सम्प्रति 'कार्यकारणयोः पौर्वापर्यविपर्ययः' इत्युक्तम्, उदाहरणपुरस्सरं स्फोटयति—

कार्यकारणयोः पौर्वापर्यविपर्ययश्च द्विधा भवति; कारणात्पूर्वं कार्यस्य भावे, द्वयोः समकालत्वे च। क्रमेण यथा—

"उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः।

निमित्तनैमित्तिकयोरयं क्रम—

स्तव प्रसादस्य पुरस्तु सम्पदः ।"

( अभि० शकु० )

"सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यमखिलञ्चारिमण्डलम् ॥"

( रघुवं० )

कारणं—कार्यनियतपूर्ववृत्ति, कार्यं—प्रागभावप्रतियोगि अव्यवहित-कारणादन्तरंजायमानम्, इति नियमे कार्यात् पूर्वमेव कारणस्य स्थितिः, एवं कारणोत्तरं कार्य्यस्य च नियमितता । यत्र किञ्चिद्विशिष्टत्वप्रदर्शनाय पूर्वोदीरितक्रमभङ्गो भवेत्तत्र कारणकार्यपौर्वापर्यविपर्ययरूपा अति-शयोक्तिः । पौर्वापर्यविपर्ययोऽपि द्विविधो भवति । कारणात्पूर्वं कार्यस्य निबन्धेन । एककालावच्छेदनेन च द्वयोः प्रतिपादनेन । क्रमश उदाहरणे समुद्ध्रियेते—

उदेतीति । पूर्वं फलोद्गमात्प्राक्, कुसुमम्—पुष्पम्, उदेति—उद्भवति, ततः कुसुमोदयानन्तरम्, फलं भवति । एवं प्रथमं कारणभूतस्य घनस्य—मेघस्य, उदयः—गगने समवेतत्वं भवति, तदनन्तरं पयः, जलं वर्षतीत्यर्थः । इति पूर्वोक्तप्रकारः, निमित्त-नैमित्तिकयोः, कारणकार्ययोः, क्रमः—पौर्वापर्यरूपः स्थिर इति शेषः । किन्तु तदुल्लङ्घनेन तव प्रसादस्य—निमित्तभूतस्य अनुग्रहस्य पुरः—प्रागेव, नैमित्तिकभूताः सम्पदो भवन्तीति महदाश्चर्य्यम् । अधिगतशकुन्तलाय दुष्यन्ताय आशिषं ददानं मारीचं प्रति दुष्यन्तस्य आशीर्वादप्रदानात् पूर्वमेव तत्फलरूपां शकुन्तलां प्राप्तवानस्मि' ) इति मनसि कृत्वा उक्तिरियम । अत्र कारणात् कार्यस्य प्राङ्निबन्धन-रूपाऽतिशयोक्तिः ।

सममिति । द्विरदगामिना—हस्तिवद्गम्भीरगमनशालिना, तेन—रघुणा, पित्र्यम्—पितुरधिगतम्, सिंहासनम्—राज्यशासनोपवेशनमञ्चः, अखिलम्—समस्तम्, अरिमण्डलम्—शत्रुसमुदायश्च, सममेव एककालमेव, समाक्रान्तम्—एकत्रोपवेशनेन अन्यत्र दमनेन अधिकृतम्। अत्र पूर्वं सिंहासनेऽभिषिक्तोऽनन्तरं शत्रुं जिगाय, इति वस्तुवृत्तौ तयोरेककालतामेव प्रादर्शयदतः, समकालत्वम् । इदञ्च निमेषमात्रविलम्बाऽभावप्रदर्शनाय निबद्धम्। अतिशयोक्तिः ।

उपमादिषु उपमेयस्योपमानेन समं साम्यं प्रदर्श्य रूपकातिशयोक्तिप्रभृतिषु एकरूपतां प्रतिपाद्य सम्प्रति उत्कर्षमेवोपमानात्तस्य समधिगमयितुं व्यतिरेकं विवेचयति—

"उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।"

( मम्मटः )

अन्यस्य—उपमेयस्य, व्यतिरेकः—आधिक्यम्, स एव व्यतिरेकालङ्कारः ।

यथा—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखन्तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥"

( कुमारसं० )

अत्र उपमानभूतचन्द्रापेक्षया 'उमामुखस्य' उपमेयस्य अधिकगुणवत्त्वकथनम् । यथा वा—

"दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥"

(रघु०)

अत्र उपमानभूतात्सूर्यादपि रघोः प्रतापातिशयवर्णनम्।

उपमानात्—चन्द्रादेः, अन्यस्य—उपमेयस्येत्यर्थः, मुखादेः, यः व्यतिरेकः—आधिक्यं गुणबाहुल्यहेतुकमिति भावः। सः एव विशेषेण—उपमेयगतोत्कर्षेण उपमानगतापकर्षेण निमित्तेन, अतिरेकः (भावे घञ्) व्यतिरेको नामालङ्कारः श्रीमम्मटाचार्येण प्रतिपादितः। विशेषणं विना उपमेयस्याधिक्येऽपि नायं भवति। अन्यथा 'चन्द्रादुत्तमं मुखम्' अत्रापि प्रसक्तेः। अन्ये "द्वयोरेकस्य न्यूनत्वमाधिक्यं वा भवेद्यदि। व्यतिरेक इति प्रोक्तः × × ॥" इति समाचक्षते। इत्येवमुपमानादुपमेयस्य न्यूनत्वेऽपि भवति। 'हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः' हनूमदादिभिः (उपमेयैः) यशसा (उत्कृष्टेन), मया (उपमेयेन) शत्रुहासैः (अपकृष्टैः) दूतपथः सितीकृतः। 'धवलता वर्ण्यते हासकीर्त्योः' इति रीत्येति भावः। इह दौत्यपद्धतौ व्यक्तैव उपमानादुपमेयस्य न्यूनता।

चन्द्रमिति—। पार्वत्या मुखस्य वर्णने कालिदासीयं पद्यमिदम्। लोला—नैकत्रस्थितिशीला—चञ्चला, लक्ष्मीः—शोभा, चन्द्रं गता रात्रौ चन्द्रमसमुपेता सती पद्मगुणान्—कमलाश्रयजन्यमृदुतादीन्, न भुङ्क्ते—नाप्नोति, पुनर्दिवसे पद्माश्रिता—कमलसंस्थिता, सती चान्द्रमसीम् अभिख्याम्—चन्द्रगतशोभाम्, न भुङ्क्ते। तु किन्तु उमामुखम्—पार्वतीवदनम् नक्तन्दिवमेकसमानमिति भावः। प्रतिपद्य—आश्रित्य, द्विसंश्रयाम्—चन्द्रकमलगतकोमलाऽऽह्लादकतारूपाम्, प्रीतिम्—सुखम्, बुभुजे। अत्र उपमानभूतयोश्चन्द्रकमलयोरुपमेयस्यैव द्विसंश्रयशोभाशालिता उमामुखस्य उपमेयस्य आधिक्यमिति व्यतिरेकोऽलङ्कारः।

दिशीति । दक्षिणपक्षे रघुदिग्जैत्रयात्रासाफल्ये पद्यमिदम् । रवेः—तादृशतेजस्विनः सूर्यस्यापि, यस्यां दक्षिणस्यां दिशायां तेजः—ज्योतिः, मन्दायते—अनुष्णीभवति । दक्षिणायने सूर्यो मन्दरश्मि र्भवतीति प्रसिद्धमेव । तस्यामेव दक्षिणस्यां रघोः—दिलीपनन्दनस्य, प्रतापं—कोशदण्डजं तेजः, पाण्ड्याः—दक्षिणापथवासिनः सैनिकवीराः, न विषेहिरे—सोढुं न शेकुः । सूर्यादपि रघुरेव तेजस्वी जात इति भावः । अत्र उपमानभूतः सूर्यः, दक्षिणेऽपि तेजस्वितया उत्कर्षमुपगतात् उपमेयात् रघोः न्यूनः सम्पन्नः । इति स्फुटो व्यतिरेकः ।

प्रतिवस्तूपमा —

"प्रतिवस्तूपमा सा स्याद्वाक्ययो र्गम्यसाम्ययोः ।
एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥" (विश्वनाथः)

प्रतीयमानसादृश्ययो र्वाक्ययोरेकस्यापि धर्मस्य पौनरुक्तभिया शब्दान्तरेण निर्देशः । प्रतिवस्तूपमा ।

यथा—

"मधुश्च ते मन्मथ ! साहचर्यादसावनुक्तोऽपि सहाय एव ।
समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य ॥"

( कुमार स० )

अत्र अनुक्तस्यापि सहजसहायस्य स्वत एव साहाय्यसम्पादने प्रवृत्तिरित्येक एवाऽर्थः शब्दान्तरेण निर्दिष्टः ।

यथा वा—

"धन्यासि वैदर्भि ! गुणैरुदारै र्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया यदाब्धिमप्युत्तरलीकरोति ॥"

( नैषधीयम् )

अत्र समाकर्षणरूप एक एव धर्मो भङ्ग्यन्तरेण पृथङ्निर्दिष्टः ।

गम्यम्—प्रतीयमानं नतु इवादिपदै र्वाच्यम्, साम्यम—सादृश्यं—साधर्म्यम्, ययोस्तयोः वाक्ययोः उपमानोपमेयभूतयोरित्यर्थः । एकोऽपि सामान्यः—तुल्यः, धर्मः—गुणक्रियारूपो विशेषः, यत्र पृथक्—शब्दभेदेन अन्य इव निर्दिश्यते—प्रदर्श्यते सा प्रतिवस्तु—प्रतिवाक्यपदम्, उपमा-सादृश्यम्, यस्यां सा प्रतिवस्तूपमाऽलङ्कारः । पौनरुक्तभिया—अचमत्कारकपुनरुक्तिदोषवारणाय, पृथक् निर्देशः—एकस्यैवार्थस्य पर्यायपदोपादानेन निबन्धनम् ।

मधुश्चेति—। कुमारसम्भवे रुद्रमभिगच्छतः कामस्य वसन्तसाहाय्य-प्राप्तिद्वारा उत्साहप्रवर्धनाय इन्द्रस्येयमुक्तिः । हे मन्मथ ! मदन ! असौ—तव पार्श्ववर्तीत्यर्थः । मधुः—वसन्तः, अनुक्तोऽपि—त्वया अन्येन वा सहायतायै अप्रेरितोऽपि, साहचर्यात्—सर्वदा तव सन्निधौ स्थितत्वात् ते—तव सहाय एव—शिवध्यानभङ्गे सहायकः एव । तदेव पुनर्निर्दिशति—'हुताशनस्य—हविर्भोजिनः—अग्नेरित्यर्थ, नोदयिता-फूत्कृत्या वर्द्धयिता त्वं भव' इत्येवं समीरणः—पवनः, केन व्यादिश्यते केन प्रेर्यते किन्तु स्वयमेव नोदयितुं प्रवर्तते । तथैव मधुरपि तव स्वयमेव सहायको वर्तते इति भावः । अत्र उपर्यधस्तनयो द्वयोरपि वाक्ययोः साम्यं यथेवादिशब्दाभावेन गम्यम् । एवं 'सहायः नोदयिता' 'व्यादिश्यते—उच्यते' इत्येकार्थकमेव शब्दान्तरेण पौनरुक्त्यवारणाय प्रतिपादितम् । अतोऽत्र प्रत्यंशं साम्यसत्तया प्रतिवस्तूपमा स्फुटा ।

धन्याऽसीति । नलस्य दूतभूतो हंसो दमयन्तीं नलाय स्पृहयतुं तयोः समगुणयोगत्वं पद्येनैतेन प्रकाशयति । हे विदर्भराजतनये ! यया त्वया नैषधोऽपि तादृशसंयमशीलो निषधाधिपति र्नलोऽपि, उदारैः—प्रशस्तैः, गुणैः—सौन्दर्यस्वभावविद्यादिभिः, समाकृष्यत—आकृष्य निजायत्ती कृतः, सा त्वं धन्या—स्पृहणीयभाग्या असि । यत् समुद्रमपि—तादृग् गभीरं सागरमपि, उत्तरलीकरोति—उद्वेलयति, इतः परं चन्द्रिकायाः—

कौमुद्याः, का स्तुतिः—कीदृशी प्रशंसा भवेत्। यथा चन्द्रिकैव समुद्रधैर्यभङ्गे समर्था तथैव जगति त्वमेव विश्वसुन्दरी नलं विकारयितुमीशाऽसी ति भावः। महतां चेतसि स्थानधिगमो नाल्पस्य भाग्यस्य फलमित्यपि बोध्यम्। अत्र समाकर्षणम् उत्तरलीकरणं च द्वयमपि समानं शब्दान्तरेण प्रतिपादितम्। एवं धन्या—स्तुत्यर्हा अत्राऽल्पोऽपिन भेदः किन्तु शब्दान्तरद्वारापृथगिव प्रतिपादितः। गम्यं साम्यं द्वयोरपि सिद्धमेव अतः प्रतिवस्तूपमैव।

निदर्शना—

"अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः।
निदर्शना भवेत्सेयं मम्मटेन यथोदिता॥"

उपमापरिकल्पकः—पर्यवसाने साम्यबोधकः, यथा—

"क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः?
तितीर्षु र्दुस्तरं मोहादुडुपेनाऽस्मि सागरम्॥"

अत्र मन्मत्या सूर्यवंशवर्णनमुडुपेन सागरतरणमिव इत्युपमायां पर्यवस्यति। यथा वा—

"अभ्युन्नताऽङ्गुष्ठनखप्रभाभि र्निक्षेपणाद्र रागमिवोद्गिरन्तौ।
आजहृतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम्॥"

अत्र उपमाधर्मस्य अरविन्दश्रियश्चरणयोरुपमयभूतयोरसम्भवादरविन्दाश्रियमिव श्रियामित्युपमायां पर्यवसानम्।

उपमाम्—सादृश्यम्, परिकल्पयति—प्रत्याययति, इत्युपमापरिकल्पकः, न भवतीति अभवन्—अनुपपद्यमानः, वस्तुनोः—पदार्थयोः, सम्बन्धः—अन्वयः, सा इयं निदर्शना—निश्चित्य—असम्भवद्वस्तुसम्बन्धं दृष्ट्वा

पर्यवसाने अनर्गलप्रलापवचनवारणाय उपमा परिकल्पकत्वेन निर्णीय, दर्शनम्—साधर्म्योद्भावनम्, निदर्शना ( भावे युच् ) नामालङ्कारः मम्मटेन—काव्यप्रकाशकारेण, यथोदिता—यथावत् प्रतिपादिता । यत्र पदार्थयोः—वाक्यार्थयो र्वा सम्बन्धोऽयुक्त इव भवन् पुनः पर्यालोचने सादृश्यप्रकाशे पर्यवस्यति तत्र निदर्शना भवति ।

क्वेति—। रघूणामन्वयं विवक्षुः कालिदासः पद्येनानेन स्वाभिमानं परिहरति । सूर्यः प्रभवः ( प्रभवत्यस्मादिति )—कारणम् यस्य सः, वंशः क—कियन्महत्त्वपूर्णः ? अल्पः—नाधिकः—विषयः—ज्ञानगोचरीभूतपदार्थो यस्यां सा, मतिः, ममेति शेषः, क ?—अतितुच्छतया महत्यन्तरे स्थितेत्यर्थः । अथापि तत्र प्रवृत्तिः कीदृशी भवतीति निदर्शयति, दुस्तरम्—दुःखेन तरीतुं योग्यम्, सागरम्—समुद्रम्, मोहात्—आत्मशक्तिपरिचयाभावेन अज्ञानात्, उडुपेन—क्षुद्रया तरणिकया, तितीर्षुः—सन्तरीतुमिच्छुः, अस्मि, वर्ते । अत्र सूर्यवंशमत्योर्महत्त्वाऽमहत्त्वप्रतिपादकस्य पूर्वस्य वाक्यार्थस्य अन्वयः, उडुपेन सागरतरणप्रवृत्तेः प्रतिपादकेन उत्तरवाक्यार्थेन समं पूर्ववाक्यार्थो नैव सङ्गच्छते । किन्तु पर्यालोचने यथा तुच्छया मत्या सूर्यवंशवर्णनं तथैव उडुपेन सागरतरणमिति साम्यं प्रतिपादितं भवतीति निदर्शना ।

अभ्युन्नतेति—। पार्वत्याश्चरणस्य कोमलतादिवर्णने कालिदाससूक्तिरियम् । तस्याः—गौर्याः, चरणौ—पादौ, निक्षेपणात्—भूमौ स्थापनात् ( हेतोः ) अभ्युन्नतयोः—मांसलतया सुपुष्टयोः, अङ्गुष्ठनखयोः, प्रभाभिः—कोमलारुणकान्तिभिः, रागमिव—रक्तमिव, उद्गिरन्तौ, पृथिव्याम्—पदस्थापनस्थले, अव्यवस्थाम्—सर्वतः सञ्चरणशीलतया अस्थिराम् अनियतैकदेशामिति भावः स्थलारविन्दश्रियम्—स्थलकमलशोभाम्, आजह्रतुः—अचूचुरताम्, अवापतुरित्यर्थः । अत्र उपमानम् अरविन्दम्, उपमाधर्मः—श्रीः, उपमेयौ चरणौ । किन्तु इवादिपदमन्तरेण साम्यं नैवान्वितम्, आहरणञ्च स्थलारविन्दशोभायाः, तच्चरणद्वारा नैव सम्भवति । किन्तु समालोचनया स एव असम्भवन् सम्बन्धः, तत्तुल्यौ

चरणौ इत्युपमा परिकल्प्यते। अतो व्यक्तैव निदर्शना। पूर्वार्द्धे रक्तमिवो-द्गिरन्तावित्यत्र क्रियोत्प्रेक्षैव विज्ञेया।

दृष्टान्तः—

"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्।"

(विश्वनाथः)

सधर्मस्य—समानधर्मस्य, वस्तुनः,—विषयस्य, प्रतिबि-म्बनम्—प्रणिधानेनगम्यसाम्यत्वम्। प्रतिवस्तूपमायामेकस्यैव धर्मस्य भङ्ग्यन्तरेण निर्देशः, इत्यस्माद्भेदः। यथा—

"नैतल्लघ्वपि भूयस्या वचो वाचाऽतिशय्यते।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम्॥"

(माघः)

सधर्मस्य—साधारणधर्मवतः (समासविधेरनित्यतया नात्रानिचः प्रवृत्तिः) वस्तुनः—विषयस्य (उपमेयवाक्यस्थितस्य) प्रतिबि-म्बनम्—(उपमानवाक्ये) बिम्बप्रतिबिम्बभावेन उपन्यसनम्, दृष्टान्तः—दृष्टः अन्तः—निश्चयः (गम्यस्य साम्यस्य) यत्र सः, नामाऽलङ्कारः। प्रणिधानेन—वाक्यद्वयस्यैकत्र स्थापनेन, गम्यम्—प्रतीयमानं न तु साक्षाच्छब्दसमर्पितम्, साम्यम्—सादृश्यं—साधर्म्यम्। यद्यपि वाक्यद्वयेऽपि गम्यसाम्यता प्रतिवस्तूपमायामपि दृष्टान्ते इव। किन्तु तत्र एकस्यैव धर्मस्य पर्यायान्तरेण कथनम्, इह तु भिन्नस्य धर्मस्य बिम्बप्रतिबिम्बभावेन औपम्यप्रत्यायकत्वम्।

नैतदिति। शिशुपालवधे—पाण्डवनिमन्त्रणपूरणयोः प्राथम्येन कतरस्य समुचितत्वमिति मन्त्रणायै समुपेयुषां कृष्णबलभद्रादीनां सदसि कृष्णोक्तं 'क्रियां केवलमुत्तरमिति प्रतिपाद्य समर्थयतो रामस्योक्तिः। लघु—

संक्षिप्तम्, अपि एतद्वचः—कृष्णवचनम्, भूयस्या—विस्तृतयाऽपि, वाच—वाण्या, नातिशय्यते—न तिरोहितम्, भवति । 'बहुरल्पीयसि दृश्यते गुणः' इति न्यायादिति भावः । तथाहि इन्धनौघं—काष्ठसमूहम्, दहतीति इन्धनौघधक् ( क्विप्घत्वधत्वभष्भावाः ) अपि अग्निः, पूषणम्—सूर्यम्, त्विषा—तेजसा, नात्येति—नाक्रामति । यद्यपि सूर्यो इन्धनं दग्धुं न प्रवर्तते अथाऽपि अग्नेरधिकं तेजोऽस्मिन्नेव । एवं लघ्वपि माधववचः सर्वतः परमिति भावः । पूर्ववाक्योत्तरवाक्ययोः साम्यस्य बिम्बप्रतिबिम्बभावेन दृष्टान्तः ।

वस्तुतस्तु प्रतिवस्तूपमैवात्र । 'अत्येति' 'अतिशय्यते' द्वयोरपि आक्रमणार्थयोः पर्यायान्तरोपादानेन निबन्धनात् । दृष्टान्ते तु पृथग धर्मस्य बिम्बप्रतिबिम्बभावः । ततो दृष्टान्तोदाहरणन्त्विदं बोध्यम्—

"कामं नृपाः सन्तु सहस्रशोन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसङ्कुलाऽपि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥"

सन्तु नाम अनेके राजानः, किन्तु पृथ्वीं राजन्वतीं—प्रशस्तराजवतीम्, अनेनैव—अङ्गुल्यानिर्दिष्टेनैव, विद्वांसः प्रतिपादयन्ति । तथाहि—नक्षत्रादिभिर्व्याप्ताऽपि रात्रिः चन्द्रेणैव प्रकाशयुक्ता भवति । अत्र 'राजन्वती' ज्योतिष्मती' इति पृथग् धर्मयोः बिम्बप्रतिबिम्बभावेन निबन्धनम् । अतो दृष्टान्तः ।

### अर्थान्तरन्यासः—

"सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥"

( मम्मटः )

साधर्म्येण वैधर्म्येण सामान्यं विशेषेण, विशेषो वा सामान्येन यत् समर्थ्यते—सोपपत्तिकतया दृढः क्रियते, सोऽर्थान्तरन्यासः ।

समर्थसमर्थकवाक्ययोः सामान्यविशेषभावे अर्थान्तरन्यासः, दृष्टान्तस्तु न तथा, इत्यनयो र्भेदः ।

यत्र—अलङ्कारे, सामान्यम्—साधारणतया घटितं प्रकृतव्यापि इत्यर्थः । विशेषः—सामान्यतो विशिष्टः, मुख्यतयैकत्रघटित इति भावः । तदन्येन—सामान्यप्रतियोगिविशेषणेन, विशेषप्रतियोगिसामान्येन, साधर्म्येण—समानधर्मवत्त्वेन, इतरेण—वैधर्म्येण विरुद्धधर्मवत्त्वेन, समर्थ्यते—प्रमाणीक्रियते पोष्यते इत्यर्थः । सः, किञ्चित्समर्थयितुम् अर्थान्तरस्य प्रस्तुतात् अन्यस्य अर्थस्य न्यासः—स्थापनम् , यत्र असौ—अर्थान्तन्यासो नामाऽलङ्कारो भवति । साधर्म्येण वैधर्म्येण च विशेषणद्वारा सामान्यसमर्थनम् एति द्विविधः । पुनः साधर्म्येण वैधर्म्येण च सामान्यद्वारा विशेषणसमर्थनम्, इति मिलित्वा चतुर्विधोऽर्थान्तरन्यासः ।

केचन कार्यस्य कारणेन, कारणस्य कार्येण साधर्म्यवैधर्म्याभ्यां समर्थनादपरानपि चतुर्भेदानाहुः । तानन्ये काव्यलिङ्गे एव अन्तर्भावयन्ति ।

यद्यपि दृष्टान्तेऽपि सामान्यविशेषणभावौ तिष्ठतः, किन्तु तत्र केवलं साम्यं बिम्बप्रतिबिम्बभावेन प्रदर्शयतः । इह तु समर्थ्यसमर्थकभावेन विवद्धौ परस्परं समर्थयतः, इति भूयान् भेदः । एवं काव्यलिङ्गे हेतु र्निष्पादकः अनुमाने ज्ञापकः, इह समर्थकः, अत एष्वपिनैक्यम् ।

सामान्यं विशेषेण यथा—

"बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
सम्भूयाऽम्भोधिमभ्येति महानद्या नगाऽऽपगा ॥" (माघः)

अत्र द्वितीयार्द्धगतेन विशेषणार्थेन पूर्वार्द्धगतः सामान्योऽर्थः समर्थ्यते ।

विशेषः सामान्येन यथा—

यावदर्थपदां वाचमेवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥" (माघः)

अत्र द्वितीयार्द्धगतेन सामान्येनार्थेन प्रथमार्द्धगतो विशेषोऽर्थः समर्थ्यते।

वैधर्म्येण यथा—

"इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत्प्रत्यप्रकारेण नोपकारेण दुर्जनः॥" (कुमार स०)

अत्र द्वितीयार्द्धगतेन सामान्येनार्थेन प्रथमार्द्धगतो विशेषोऽर्थो वैधर्म्येण समर्थ्यते।

बृहदिति—उद्धवस्योक्तिरियम्। क्षोदीयान्—क्षुद्रतरः, अपि बृहत्सहायः—महासहायवान्, सन् कार्यान्तम्—कार्यसिद्धिम्, गच्छति प्राप्नोति। नीचोऽपि महता सङ्गतः स्वेप्सितं निश्चितं साधयतीत्यर्थः। तदेव समर्थयति—नगापगा—गिरिणदी, महानद्या—सागरगामिन्या गङ्गादिकया, सम्भूय—सम्मिलिता भूत्वा, अम्भोधिम्—समुद्रम्, अभ्येति—प्राप्नोति। क्षुद्रस्येयं कथा, वीरप्रवरस्य शिशुपालस्य बाणादिभिः सङ्गतस्य कार्यसिद्धौ न सन्देहलेशोऽपीति भावः। अत्र सामान्यतः सहायवतः क्षुद्रस्य कार्यान्तगमनं, विशेषेण नगनद्यादृष्टान्तेन अर्थान्तरन्यासः। सच साधर्म्यरीत्या प्रतिपादितः।

यावदिति—। माधवः—कृष्णः, यावन्तोऽर्था यावदर्थं (साकल्येऽव्ययीभावः) तावन्त्येवपदानि यस्यां तां वाचम् आदाय—प्रतिपाद्य, विरराम भाषणाद्विरतो बभूव तूष्णीं तस्थौ। यतः, महीयांस—मनस्विनः, प्रकृत्या—स्वभावेन, मितभाषिणः—अल्पसारवचोभाषिणः, भवन्तीत्यर्थः। अत्र कृष्णः अभिधेयसम्मिताक्षरमुक्त्वा मौनमवललम्बे इति व्यक्तिविशेषसम्बन्धेन विशेषः, सामान्येन महीयसां मितभाषितास्वभावेन समर्थितः। अत्राऽपि साधर्म्येणैव बोध्यम्।

इत्थमिति। तारकासुरस्य दौरात्म्यं प्रतिपादयतो ब्रह्मण उक्तिः।

इत्थम्—पूर्वप्रदर्शितदिशा, आराध्यमानोऽपि—अस्माभिः पवनानलादिदेवैस्तदनुकूलतया सेव्यमानोऽपि, तारकः, भुवनत्रयम्—त्रिलोकीम्, क्लिश्नाति—परिपीडयति, तथाहि—दुर्जनः—खलः, प्रत्यपकारेण—'शठे शाठ्यं समाचरेत्' इति नीत्या दुष्टव्यवहारेण, शाम्येत्—शान्तो भवेत्, उपकारेण—हिताचरणेन, नहि । प्रत्युत तप्ततैले शीतलसलिलसेकेन, महती ज्वाला प्रादुर्भवति । अत्र तारकस्य आराधनेन क्लेशकारित्वे विशेषे, प्रत्यपकारेण शाम्यति नतूपकारेणेति वैधर्म्येण सामान्येन समर्थनम् ।

तुल्ययोगिता—

"पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ।
एक धर्माऽभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥"

( विश्वनाथः )

केवलं प्रस्तुतानामप्रस्तुतानां वा एकधर्मसम्बन्धः तुल्ययोगिता ।

यथा—

"यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधींश्च
पृथूपदिष्टां दुदुहु र्धरित्रीम् ॥ ( कुमारस० )

अत्र हिमवद्वर्णनस्य प्रकृतत्वात् तद्गतौषधिरत्नानां द्वयानामपि प्रकृतत्वं, तेषां दोहनाक्रियारूपैकसमानधर्मसम्बन्धात् औपम्यस्य गम्यत्वात् केवलप्राकरणिकविषयोऽयमलङ्कारः ।

"नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात्कदलीविशेषाः ।

लब्ध्वाऽपिलोके परिणाहि रूपं
जातास्तदूर्वोरुपमानबाह्याः ॥"

( कुमार स० )

अत्र नागेन्द्रहस्तानां कदलीविशेषाणाञ्च द्वयानामप्यप्रस्तुतानां परिणाहिरूपलाभक्रियायाः समानधर्मस्य सम्बन्धात् केवलाऽप्राकरणिक विषयकमिदमुदाहरणम् ।

प्रस्तुतानाम्—प्रकृतानाम् – केवलोपस्थितानामित्यर्थः वा—अथवा, अन्येषाम्—केवलानुपस्थितानाम्, पदार्थानाम् एकेन—साधारणेन, धर्म्मेण—गुणेन क्रियया वा, अभिसम्बन्धः—एकत्र संयोजनम्, यदा भवेत् तदा तुल्या—समानधर्मरूपा, योगिता—अन्वयः, यत्र असौ तुल्ययोगितानामाऽलङ्कारः । तुल्ययोगः—एकधर्माऽभिसम्बन्धः, अस्त्येषामिति तुल्ययोगिनः प्राकरणिका अप्राकरणिकाश्च तेषां भावो वा तुल्ययोगिता ।

यमिति—हिमवतो महत्त्वस्य वर्णनम् । सर्वशैलाः—समस्त-पर्वताः, दोहदक्षे—दोहनकर्मनिपुणे, मेरौ—तदाख्यगिरौ, दोग्धरि स्थिते सति यम्—हिमवन्तम्, वत्सम् – पयोधरः स्रवणाय समुपयोगिनं वत्समिति भावः, पृथुना—वैन्येन नृपेण उपदिष्टाम्—दोहनाय निर्दिष्टाम्, ( पुरा कृतयुगे भगवदंशावतारः पृथुः जगत्कल्याणाय गोरूपधरां पृथ्वीं दुदोह, इति पौराणी वार्ता ) धरित्रीम्--धेनुरूपामित्यवगन्तव्यम्, भास्वन्ति—देदीप्यमानानि दीप्तिशालिनीश्च, रत्नानि महार्हसुवर्णादीनि, महौषधीः—जीवन्त्यमृताप्रभृतीश्च । दुग्धरूपाणि इति भावः, दुदुहुः । अत्र हिमालयवर्णने प्रस्तुतयोरोषधिरत्नयो र्दोहनक्रियारूपेग समानेन धर्मेण सम्बन्धात् प्राकरणिकतुल्ययोगिता ।

नागेन्द्रेति—पार्वत्याः कोमलयोः 'शीतकाले भवेदुष्णमुष्णकालेच शीतलम्' इति श्यामोचितगुणयोरूर्वो र्वर्णने उपमानं कदलीकरिकरप्रभृति

निरस्यति कालिदासः । लोके—जगति, परिणाहि—दीर्घविशालम्, रूपं लब्ध्वाऽपि नागेन्द्रहस्ताः—प्रशस्तकरिशुण्डाः, त्वचि कर्कशत्वात्; कदली विशेषाः—विशिष्टकदल्यः, एकान्तशैत्यात्—शीतोष्णसमयेऽपि एकविध-शीतलत्वात् । तस्याः—पार्वत्याः, ऊर्वोः—जङ्घयोः, उपमानतः—सादृश्यप्रतियोगित्वतः, बाह्याः—दूरीभूताः, जाताः । ताभ्यामप्युत्कृष्टता ऊर्वोः कार्कश्यैकान्तशैत्याभावादिति भावः । द्वयोरप्युपजाति वृत्तिः, अत्र पार्वत्यूरुवर्णने अनुपस्थितयोः नागेन्द्रकरकदलीविशेषयोः, परिणाहि-रूपलाभरूपया क्रियया एव उपमानबाह्यतया च समानेन धर्मेण सम्बन्धो जातः । अतः अप्राकरणिकविषया तुल्ययोगिता ।

दीपकम्—

"अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते ।"

(विश्वनाथः)

अप्रस्तुतप्रस्तुतयोरेकधर्माऽभिसम्बन्धो दीपकम् । यथा—

"बलावलेपादधुनाऽपि पूर्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा ।
सतीव योषित्प्रकृतिश्च निश्चला
पुमांसमभ्येति भवान्तरेष्वपि ॥"

(माघः)

अत्र प्रस्तुतायाः निश्चलायाः प्रकृतेरप्रस्तुतायाः पातिव्रतायाश्च जन्मान्तरेऽपि स्वकीयपुरुषानुगमनरूपैकक्रियासम्बन्धः ।

तुल्ययोगितालक्षणे प्रतिपादितायाः पूर्वस्याः कारिकाया अनुवृत्त्या अयमर्थः सम्पद्यते । अप्रस्तुतप्रस्तुतयोः—अप्राकरणिकप्राकरणिकयोः, (वचनमविवक्षितम् जात्या एकत्वेन वा संग्रहः) पदार्थयोः एकधर्माभि-सम्बन्धः—समानगुणक्रियारूपसाधर्म्येणान्वयो यदा तदा दीपकम्—

प्रकृतमिव अप्रकृतमपि दीपयति प्रकाशयति, इति दीपकम् नामाऽलङ्कारः । तुल्ययोगितायां केवलप्रस्तुतानाम् एवं केवलाऽप्रस्तुतानाम्, इह प्रस्तुताऽप्रस्तुतानां समभिव्याहृतानामेव समानधर्मसम्बन्धेन औपम्यस्य गम्यत्वम् । इति प्रकटो भेदः ।

बलेति—शिशुपालस्य दौरात्म्यं वर्णयतो नारदस्य श्रीकृष्णं प्रत्युक्तिः । जिगीषुणा—परान् पराजेतु मिच्छुना, तेन—चैद्येन, बलावलेपात्—शक्ति गर्वात्, अधुनाऽपि—त्वयि जगत्यवतीर्णेऽपि अथवाऽस्मिञ्जन्मन्यपि, पूर्ववत्—हिरण्यकशिपुरावणजन्मधृतप्राचीनस्वभाववत्, जगत्—भुवनम्, प्रबाध्यते—सातिशयं पीड्यते । यतः निश्चला—स्थिरा सती-प्रतिव्रता नारी प्रकृतिः—स्वभावः, च द्वयमपीत्यर्थः, भवान्तरेष्वपि—जन्मान्तरेष्वपि, पुमांसम्—स्वामिनम्—तादृक्प्रकृतिवन्तं पूरुषञ्च, अभ्येति प्राप्नोति न च कदाचिदपि जहातीत्यर्थः । अत्र शिशुपालस्य पूर्वजन्मजातदौरात्म्यवर्णनपुरस्सरं प्रकृतिवर्णनस्य प्राकरणिकतया सत्याश्च अप्रस्तुताया अप्राकरणिकतयाऽपि एकधर्माऽभिसम्बन्धो विहितस्ततो दीपकं नामालङ्कारः ।

दीपकस्य प्रकारान्तरं निरूपयति—

"अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ।"

( विश्वनाथः )

तदापि दीपकमेव । यथा—

"विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रावा किमु विषविसर्पः किमु मदः ?
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयाति च सम्मीलयति च ॥

( उत्तरचरितम् )

अत्र भ्रमयति सम्मीलयति चेत्युभयोः क्रिययोः कर्तृकारकमेकं विकार इति कर्मकारकञ्चैकं चैतन्यमिति ।

अथ—( भेदान्तरप्रदर्शनाय ) अथवा अनेकासु क्रियासु—बहुषु क्रियापदेषु सत्सु एकञ्चेत् कारकम्—क्रियाजनकम् कर्त्रादि स्यात्तदा तदपि दीपकम्—दीपवत् एकेनैव कारकेण बहूनां क्रियानां प्रकाशनात् । दीप इव दीपकम् ( संज्ञायाञ्चेति कन् ) ।

विनिश्चेतुमिति— । सीतास्पर्शसुखमनुभवतो मुग्धस्य श्रीरामस्येदं वचः । त्वद्गात्रस्पर्शजन्यो मानसभावः इति सर्वत्र योजनीयम् । सुखम—प्रमोदः, दुःखम्—व्यथा, इति वा, अथवा प्रमोहः—मनोव्यामोहः, निद्रा—सुषुप्तिः, किमु ? विषविसर्पः—गरलसञ्चारः, मदः—आसवादिपानजनितावस्थाविशेषः किमु ? इति विनिश्चेतुम्—निर्णेतुम्, न शक्यः, इदमिति इयत्तया वा न वक्तुं शक्यः । अनिर्वचनीय एवेति भावः । हि—तथाहि, तव स्पर्शे—प्रतिवारं त्वदङ्गस्पर्शे, परिमूढः—विषयानुभवशून्यतया स्तब्धः, इन्द्रियगणो येन सः विकारः—त्वदाश्लेषजन्या चित्तविकृतिः, मम चैतन्यम्—चेतनाम्, ज्ञानाश्रयीभूतवृत्तिम्, भ्रमयति—वास्तविकविचारशून्यत्वेन मोहयति च, पुनः सम्मीलयति—आच्छादयति तिरोधत्ते इत्यर्थः । 'भ्रमयति' 'सम्मीलयति' अनयोः क्रिययोरेक एव विकारः कर्तृकारकतया चैतन्यञ्च कर्मकारकतया निबद्धमिति कारकदीपकम् ।

सन्देहः—

"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ।"

भेदोक्तौ तदनुक्तौ च द्विधाऽसौ परिकीर्तितः ।

प्रकृते—उपमेये, अन्यस्य—उपमानस्य, प्रतिभा—कविप्रौढोक्तिः, तया उत्थितः; तेन स्थाणुर्वा पुरुषो वा' इति सन्देहे नायमलङ्कारः । भेदः—वैधर्म्यम् । भेदोक्तौ यथा—

"अयं मार्तण्डः किं ? स खलु तुरगैः सप्तभिरितः
कृशानुः किं ? सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षात् ? महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥"

भेदानुक्तौ यथा—

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः ?
चित्तोन्मादरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाऽभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ।"

प्रकृते—प्रस्तुतविषये, यद्भिरित्वेन सन्दिह्यते तस्मिन्नुपमेये इति भावः, अन्यस्य—अप्रस्तुतविषयस्य प्रतिभया—कविस्वनैपुण्येन, उत्थितः—तन्मूलक इत्यर्थः संशयः—इदं तद्वा इत्यन्यतरज्ञानाभावात् जायमानोऽनिर्णयः, सन्देहो नामालङ्कारः । सन्देहस्य निबन्धः उपमानगतधर्मस्योपमेये बाहुल्येन निबन्धनायैव कविप्रौढोक्त्या सम्पाद्यते । तेन अचमत्कारी संशयो नास्य विषयः । तिमिरान्धकारेऽप्रसृतदृष्टेर्जनस्य 'स्थाणुर्वा पुरुषो वा' इति सन्देहे नालङ्कारस्य लेशोऽपि । असौ पुनः भेदोक्तौ—प्रस्तुते-संशयभित्तित्ववति उपमेये सन्दिह्यमानस्योपमानस्य वैधर्म्यस्याऽप्रतिपादने, तदनुक्तौ—तस्याभेदप्रतिपादने च द्विप्रकारः सन्देहः क्रमशः प्रदर्श्यते—

अयमिति— राजस्तुतौ निबद्धमिदम् । प्रतिभटाः—तव शत्रुभूता योद्धारः, आजौ—संग्रामे, त्वाम् विलोक्य विकल्पान्—संशयान्, विदधति—कुर्वन्ति संशेरते इत्यर्थः । विकल्पप्रकारमेव प्रदर्शयति । अयम्—समरे योद्धुमागच्छन्, मार्तण्डः—सूर्यः, किम् ? न खलु, यतः सः—मार्तण्डः, सप्तभिः तुरगैः—अश्वैः, इतः तस्य सप्ताश्वतया प्रसिद्धेः,

अयन्तु न तथेति भावः । तर्हि किम् ( अयं तेजस्वी ) कृशानुः—अग्निः, सोऽपि नहि, एषः नियतम्—नियमेन, सर्वाः—दिशः, चतसृमित्यर्थः न प्रसरति स तु तथाविधं प्रसरतीत्यर्थः । ननु असौ साक्षात्—उपस्थितः, कृतान्तः—यमराट्, किम् ? ( स्मृतम् ! ) असौ महिषः, ( उह्यते अनेन इति ) वहनः, यस्य सः अयन्तु न तथा । इति निश्चयाभावात् चिरम् न तु क्षणमात्रं ते संशेरते । अत्र वैधर्म्यप्रदर्शनपूर्वकः संशयः, अतः उक्तभेदः सन्देहः ।

अस्या इति । उर्वश्या विश्वसुन्दर्य्या रूपेण चमत्कृतस्य पुरुरवस इयमुक्तिः । अस्याः—उर्वश्याः, सर्गविधौ—निर्माणविधौ, कान्तिप्रदः—लावण्यप्रदाता, चन्द्रः नुः—किम् ? प्रजापतिः—स्रष्टा, अभूत् ? अन्यथा कुत इयत्सौन्दर्य्यं प्रजापतिरचितसामान्यसंसारे ! नु—किं वा, चित्रोन्मादे—मनोमथने, रसः—प्रीतिः, यस्य सः मदयत्यसौ मदनः—कामः प्रजापतिरभूत् ? इत्यर्थः । अन्यथा कुत इयदुन्मादिनी इयं रमणी जाता ? नु—वैकल्पिकवितर्के, अथवा पुष्पाकरः—कुसुमसमृद्धिशाली मासः वसन्तः, प्रजापतिर्जातः । अन्यथा कुसुमवत्कोमलत्वमस्या अङ्गस्य कथम्! वितर्कस्य हेतुं सम्प्रति ब्रूते—वेदाभ्यासेन—सततश्रुतिस्वाधायेन, जड़ः—रसशून्यः, विषयेभ्यः—सौन्दर्य्यप्रियतादिभ्यः व्यावृत्तम्, कौतुहलम्—कौतुकम्, यस्य सः पुराणः—प्राचीनः शुष्क इत्यर्थः मुनिः, इदम्—प्रत्यक्षं दृश्यमानम्, मनोहरम्—चित्तविमोहनम्, रूपम्—सौन्दर्य्यम्, निर्मातुं कथं प्रभवेत् । तादृशरूपनिर्माणे सुबद्रसस्य नित्यतरुणस्य कामचन्द्रवसन्तसदृशस्य सरसस्यैव प्रजापतेः शक्तिः । शार्दूलविक्रीडितम् वृत्तम् । अत्र अस्याः सर्गविधौ कतमः प्रजापतिः' इति अनुक्तभेदः संशयः । अतः सन्देहस्य द्वितीयः प्रकारोऽत्र व्यक्तः ।

भ्रान्तिमान्—

"साम्यादतस्मिंस्तद्बुद्धि र्भ्रान्तिमान् प्रतिभोत्थितः ।"

( विश्वनाथः )

प्रतिभोत्थितेति 'शुक्तिकायां रजतम्' इति भ्रान्ति र्नास्या-लङ्कारस्य विषयः । यथा—

"महाराज ! श्रीमन् ! जगति यशसा ते धवलिते
पयःपारावारं परम पुरुषोऽयं मृगयते ।
कपर्दी कैलाशं, करिवरमथाऽयं कुलिशभृत्,
कलानाथं राहुः, कमलभवनो हंसमधुना ॥"

( महापद्यम् )

अत्र भोजराजस्य यशसा धवलीकृते जगति सर्वत्राऽपि परमपुरुषादीनां समुद्रादिभ्रान्तिः कविप्रातिभोत्थापितेति भ्रान्ति-मानलङ्कारः ।

अतस्मिन्—अतथाभूते ( पदार्थे ) सदृशे तदन्ये वस्तुनीत्यर्थः । साम्यात्—तद्भिन्नत्वे तद्गतभूयोधर्मवत्त्वात्, प्रतिभायाः—कवित्वनैपुण्यात्, उत्थिता तद्बुद्धिः—वस्त्वन्तरप्रतीतिः, भ्रान्तिमान्—भ्रान्तिः—अयथार्थ-ज्ञानरूपश्चित्तधर्मः, विद्यते अस्मिन्निति तन्नामाऽलङ्कारः । सन्देहे सन्दि-हानजनस्य वस्त्वनिर्णये विच्छित्तिः । इह तु भ्रान्तस्य प्राकरणिके तत्सा-दृश्यविलोकनेन निश्चिततया जायमानोऽप्राकरणिकनिश्चयः । रूपके उपमेयस्याऽपि ज्ञानम् । इह तु भ्रान्तस्य न तथेति पृथगेवायम् । भ्रमोऽपि कविप्रतिभोत्थितः साम्यमूलको विच्छित्तिप्रतिपादकः एवास्य विषयः । तेन प्रतिभोत्थितत्वाभावात् गदया चूर्णितशिरसः 'चन्द्रश्चत-सृभ्रमति' 'पृथिवी वेपते' प्रभृतिषु भ्रान्तिषु साम्याभावान्नायमलङ्कारः ।

महाराजेति—भोजनृपतेः कीर्तिवर्णयतः कस्यचन कवेश्चमत्कारिणी भणितिः । महाराज ! राजेश्वर ! श्रीमन्—सम्पत्तिशालिन्, ते—।व,

यशसा—( कविभिः शुभ्रतया वर्णितया ) कीर्त्या, धवलिते—उज्ज्वली कृते, जगति, परमपुरुषः—क्षीरसागरशायी विष्णुः, पयःपारावारम्—क्षीरनिधिम्, मृगयते—उज्ज्वले उज्ज्वलतया एकरूपतामुपगतत्वेन भ्रान्तः सन् अन्विष्यति, एवं कपर्दी—शिवः, कैलासम् स्वच्छतया अप्रतीतं निजं धवलं गिरिम्, मृगयते । कुलिशभृत्—इन्द्रः, करिवरम्—शुभ्रवर्णमैरावतम्, राहुःकलानाथम्—शुभ्रकिरणं चन्द्रम्, ग्रहीतुमित्यर्थः, कमलभवनः—ब्रह्मा, हंसम्—निजवाहनीभूतम्, अन्विष्यति । श्वेतेन यशसा शुक्लीकृते संसारे क्षीरनिधिकैलासादीनां श्वेतवर्णानामन्तर्लीनतया भ्रान्तविष्णुशिवादिकर्तृकमन्वेषणं नितरां विच्छित्तिजनकम् । शिखरिणी वृत्तम् ।

अपह्नुतिः—

" प्रकृतं प्रतिषिध्याऽन्यस्थापनं स्यादपह्नुतिः ।"

( विश्वनाथः )

इहाऽपि कविप्रौढोक्तिसिद्धमेव । यथा—

"नेदं नभोमण्डलमम्बुराशि-
नैताश्च तारा नवफेनभङ्गाः ।
नायं शशी कुण्डलितः फणीन्द्रो
नासौ कलङ्कः शयितो मुरारिः ॥"

अत्र प्रस्तुतानां नभोमण्डलादीनां प्रतिषेधेन अम्बुराशिप्रभृतीनामप्रस्तुतानां स्थापनम् । यथा वा—

"दशानन किरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥"

अत्र प्रस्तुतानां मणीनां प्रतिषेधेन अश्रुबिन्दूनां स्थापनम् ।

प्रकृतम्—प्रस्तुतम्—उपमेयमित्यर्थः, प्रतिषिध्य—असत्यतयाप्रतिपाद्य, अन्यस्य—अप्रस्तुतस्य उपमानस्येत्यर्थः, स्थापनम्—सत्यतया प्रतिपादनम्, अपह्नुतिः—अप—अयथार्थतयाह्नुतिः—( प्रकृतस्य ) गोपनम्, तन्नामाऽलङ्कृतिः। अत्राऽपि प्रकृतं निषिध्य अप्रकृतस्थापनं कविप्रौढोक्त्या—कविवचोभङ्ग्या, सिद्धम्—उपनिबद्धम् एव। तेन यस्य कस्यचित् निषेधेऽपरस्यस्थापने नालङ्कारः। सन्देहे न प्रकृतं निषिध्यते। आक्षेपे केवलं प्रकृतं निषिध्यते एव।

नेदमिति—। इदम्—उपरि वर्तमानम्, नभोमण्डलम्—गगनम्, नस्ति किन्तु अम्बुराशिः—समुद्रः ( सोऽपि नील इति भावः ) एताश्च ताराः नहि—नक्षत्राणि नसन्ति, किन्तु नवफेनभङ्गाः—नवीनहिण्डीरखण्डानि, अयं कुण्डलितः—चक्राकारेण परिणतः, चन्द्रो नास्ति किन्तु फणीन्द्रः, उज्वलवर्णतया विदितः शेषः, असौ—मध्ये दृश्यमानः, कलङ्कः—चिह्नरेखा, नास्ति किन्तु शयितः, निद्रितः ( श्यामवर्णः ) मुरारिः—विष्णुः। अत्र प्रस्तुतान् नभोमण्डलताराचन्द्रकलङ्कान् निषिध्य अतिसाम्येन कविप्रौढोक्तिदिशा सिन्धुफेनभंङ्गशेषहरि-प्रभृतीनामप्रस्तुतानां स्थापनेन अपह्नुतिः।

दशाननेति—। रामजन्मसमये रावणमुकुटमणीनां भूमिपतनप्रसङ्गेन निबद्धमिदं पद्यम्। तत्क्षणम्—रावणहन्तृरामजन्मकाले, राक्षसश्रियः—रक्षोगणराजलक्ष्म्याः, अश्रुबिन्दवः—नयनजलविन्दवः दशाननकिरीटेभ्यः—रावणमुकुटेभ्यः, दशभ्योऽपीति भावः। मणिव्याजेन—( मणयो नासन् किन्तु अश्रुविन्दव एव ) पृथिव्याम्—भूमौ, अशकुनप्रदर्शनायेति तत्त्वम्। पर्यस्ताः—विच्छिन्नतया पतिताः। व्याजपदोपादानेन मणिनिषेधस्तत्रैव च अश्रुविन्दुस्थापनमिति अपह्नुत्यलङ्कारः।

समासोक्तिः—

"यत्रोक्ताद्गम्यतेऽन्योऽर्थ स्तत्समानविशेषणः।
सा समासोक्तिरुदिता संक्षेपार्थतया बुधैः॥"

( अग्निपुराणम् )

तत्समानविशेषण इत्युपलक्षणं, तेन तत्समानकार्यः, तत्समान-लिङ्गश्च गृह्यते। यत्र समैः विशेषणैः कार्यलिङ्गैश्च उक्तात्—प्रस्तुतात् अप्रस्तुताद्वा, अन्यः—यथाक्रममप्रस्तुतः प्रस्तुतो वा, अर्थः गम्यते—बोध्यते, सा सङ्क्षेपोक्तिस्वरूपत्वात समासेन सङ्क्षेपेण उक्तिः" इति व्युत्पत्त्या समासोक्तिः कथिता। संक्षेपश्च एकस्य वचनेनोभय प्रतिपत्तिरिति। आदर्शे—"अप्रस्तुताद् वाच्यात् प्रस्तुतस्य गम्यत्वे समासोक्तिः" इत्याभिहितम्। नव्यास्तु तद्विपरीत्येन—"प्रस्तुतादप्रस्तु-तप्रतीतौ समासोक्तिः, अप्रस्तुतात् प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा" इत्याहुः। "वाच्ये प्रस्तुतेऽप्रस्तुतव्यहारसमारोपः समासोक्तिः" इति विश्वनाथादयः। वस्तुतस्तु उभयत्राऽपि समासोक्तेरेवाऽभ्युपगमस्यौचि-त्यादनुगुणमेव प्राचीनरीत्या लक्षणमुक्तमस्माभिः।

**अथ उक्तात्—प्रतिपादनीयविषयात्, तत्समानम् वर्णनीय वस्तुतु-ल्यम्, विशेषणम्—भेदकधर्मः, क्रिया लिङ्गञ्च यस्य तादृशः, अन्योऽ-र्थः—अनुक्तपदार्थः, गम्यते—समव्यवहारतया प्रतीयते नत्वभिधया बोध्यते, सा सङ्क्षेपार्थतया—एकेनैव पदेन द्वयोः—प्रस्तुताप्रस्तुतयोः बोधनम्—सङ्क्षेपः, तदर्थतया, समासोक्तिः—समासेन—सङ्क्षेपेण उक्तिः, प्रतिपादनम्, इत्यन्वर्थाऽलङ्कृतिः, बुधैः—आलङ्कारिकैः, उदिता—प्रतिपादिता। कारिका वृत्तावेव स्फुटं व्याख्याता। उपलक्ष्यते—समान-तया अन्यदपि गृह्यते अनेन, इति उपलक्षणम्—उजहत्स्वार्थलक्षणयाऽ-न्यग्राहकत्वम्, विशिष्यते—भिन्नतया स्थाप्यते अनेनेति विशेषणम्—भेदको धर्मः, अंशतः, कार्यं लिङ्गमपि तत्समानमेव भेदकमतस्तयोरपि तदुपलक्षणम्। तदुक्तं—'कार्यलिङ्गविशेषणैः'। उक्तात्—वाग्विषयी-कृतात्—प्रस्तुतादप्रस्तुताद्वेति। अन्यः—उक्तादतिरिक्तः।**

**वाच्याभ्यां प्रस्तुताऽप्रस्तुताभ्यां—क्रमशस्तदन्यतयाअप्रस्तुतप्रस्तुतयो**

विशेषणादिसामर्थ्येन गम्यत्वे समासोक्तिः; इत्यभिमतं सङ्गमयितुं प्राचां दण्डिप्रभृतीनाम् अर्वाचां मम्मटादीनां मतमुद्धृत्य आग्नेयीं कारिकां व्याख्यातपूर्वां परिपुष्णाति । दण्डिनिर्मितकाव्यादर्शे लक्षणमुक्तम् 'अप्रस्तुतादिति । एतेन—वाच्यात् अप्रस्तुतात् ( उपमानात् ) प्रस्तुतस्य ( उपमेयस्य ) प्रतीयमानत्वे समासोक्तिः । इति अप्रस्तुतात् प्रस्तुतगम्यस्वरूपा आगता । प्रस्तुतादप्रस्तुतरूपां समर्थयितुं नवीनमतमुपन्यस्यति । तत्राऽलङ्कारसर्वस्वकारः "विशेषणानां साम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः ।" "अप्रस्तुतात्सामान्यविशेषभावे कार्यकारणभावे सारूप्ये च प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा ।" इतः फलितम्—( अप्राकरणिकात् ) प्रस्तुतनिष्ठं गम्यत्वम् अप्रतुतप्रशंसा—विषयः; ( अप्राकरणिकात् ) अप्रस्तुतनिष्ठं गम्यत्वं समासोक्तिविषयः, इति । ततो द्वितीयोऽपि प्रकारः प्रतिपन्नः ।

समासोक्तौ विशेषणादेरेव साम्यं न तु विशेष्यस्यापि तत्र श्लेषस्य प्रसक्तेः । अप्रस्तुतस्य गम्यत्वेन प्रस्तुते केवलं तस्यव्यवहारः समारोप्यते, रूपसमारोपे तु रूपकमेव पदं निधत्ते । तदाह दर्पणकारो विश्वनाथः—"समासोक्तिः समैर्यत्र कार्य—लिङ्गविशेषणैः । व्यहारसमारोपः प्रकृतेऽन्यस्य वस्तुनः ।" अस्याऽपि मते गम्यस्य अप्रस्तुतस्य प्रस्तुते व्यवहारमात्रे आरोपः ।

एवं प्राचीननवीनमतं परस्परविरुद्धमप्युद्धृत्य आग्नेयलक्षणेन तत्सङ्गमयन् स्वमतस्य वास्तविकतां निर्णयते—वस्तुतस्त्विति । उभयत्राऽपि—अप्रस्तुतात्प्रस्तुतस्यगम्यत्वे प्रस्तुतादप्रस्तुतस्य च गम्यत्वे, समासोक्तेः—एकस्यवचनेनोभयबोधनार्थं संक्षिप्तवचोभङ्ग्याः, अभ्युपगमस्यौचित्यात्—अन्वर्थकतया प्राप्ते योग्यतया, अनुगुणम् उपयुक्तमेवेत्यर्थः, प्राचीनरीत्या अग्निपुराणोक्तं लक्षणं प्रतिपादितं सङ्कलयितृभिः ।

किन्त्वस्य वास्तविकत्वे सन्दिहानमनसो ममाऽप्यत्र किञ्चित् प्रष्टव्यम् । किं समासोक्तिरित्यन्वर्थ महासंज्ञयैव द्विप्रकारता तत्र भवता समुपपादिता?

अथवा दण्डिनो मतं रक्षता द्वयमुदिता ? साहित्यशास्त्रे नामविधानेनैव सम्पूर्णं लक्षणं नैव स्फुटीभवति । अन्यथा वक्रोक्तिरिति सरलतारहिताऽभिधानार्था पर्यायोक्ते कथं न प्रसरेत् ? उत्प्रेक्षैव उत्कृष्टार्थस्फुरणशालिनी कतिपु चनाऽलङ्कृतिपु किमिति न प्रसज्येत ? दण्डिनश्चेदुक्तेः सारवत्तां स्थिरयितुकामः । कथं न तदीयमेव लक्षणमत्रोपन्यस्तम् । दण्डिनो लक्षणस्य समालोचना नाऽभीष्टा सम्प्रति । किन्तु अर्वाचां मतेन दुग्धशर्करामिश्रणमिव नितरां मिष्टमिश्रणमाग्नेयोक्तं कथमायासेन दूरमपनीतम् । वयन्त्विमं स्फुटमर्थं पश्यामः । उक्तात्—प्राकरणिकात्, समानविशेषणः—सदृशविशेषणकार्यलिङ्गः, अन्यः—अप्रस्तुतः, अर्थः यत्र गम्यते—प्रतीयते, सा सङ्क्षेपार्थतया बुधैः ' समासोक्तिः ' उदिता । एतेन अप्रस्तुतप्रशंसाया अपि स्थानं बलवदनया नाऽधिकृतम् । अन्यत् सर्वं सूपपन्नमेव ।

उदाहरणं क्रमेण—

" श्रुतिसुखभ्रमरस्वनगीतयः
कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाहतैः
किसलयैः सलयैरिव पाणिभिः ॥"

अत्र विशेषणसाम्यात् कार्यसाम्याच्च प्रस्तुताद्वनलतारूपाऽर्थादप्रस्तुतो नर्तकीरूपोऽर्थः प्रतीयते ।

"चातकास्त्रिचतुरान् पयः कणान्
याचते जलधरं पिपासितः ।
सोऽपि पूरयति भूयसाऽम्भसा
चित्रमत्रमहतामुदारता ॥ "

( पूर्वचातकाष्ट० )

अत्र अप्रस्तुताच्चातकाज्जलधराच्च कार्यसाम्यात् प्रस्तुतो याचकः, उदारातिशयो धनपतिश्च बोध्यते ।

श्रुतीति । श्रुतिसुखाः—कर्णानन्दकाः, भ्रमरस्वनाः—मधुरुतानि, एव गीतयः यासां ताः । कुसुमानि एव कोमलदन्ताः, तेषां रुचयः—प्रभाः, यासां ताः, उपवनान्ते—उद्यानप्रान्ते, उपवनस्य तटस्थसीमसु तत्रैव तासां पवनायतत्वं साधु युज्यते, या लता—व्रतत्यः, ताः पवनाहतैः—वायुसञ्चालितैः, लयः—स्वरसामञ्जस्यम्, तत्सहितैः सङ्गीतानुगतसञ्चालनैरित्यर्थः । किसलयैः—पल्लवैः, पाणिभिः—हस्तैः, इव बभुः—शुशुभिरे । अत्र प्रस्तुतासु लतासु गीति—दन्तरुचि—प्रभृति विशेषणसाम्येन, लतागतलिङ्गसाम्येन, सलयतारूपकार्यसाम्येन च गम्यानामप्रस्तुतानां नर्तकीनां व्यवहारसमारोपः, अतोऽत्र समासोक्तिः । अत्र उपमारूपकेऽपि अलङ्कारौ गुणीभूतौ स्तः । वृत्तमिदं द्रुतविलम्बितम् । उदाहरणञ्च प्रस्तुतादप्रस्तुतस्य गम्यत्वे प्रदर्शितम् ।

चातक इति । अल्पमेव याचमानाय भृशं दानमुपहरतो जनस्य प्रशंसायां निबद्धमिदम् । चातकः—स्वातीनक्षत्रे पातुमिच्छुः सन्, जलधरम्—मेघम्, त्रिचतुरान्—नाधिकानिति भावः । पयः कणान्—जलविन्दून्, याचते—प्रार्थयति, सोऽपि—प्रार्थितो मेघोऽपि भूयसाम्भसा—प्रचुरेण जलेन, पूरयति—तद्याच्ञां पूर्णां विधत्ते । अत्र चित्रम् । इदं महदद्भुतमित्यर्थः । किन्तच्चित्रमित्याह—महताम्—उदाराशयानाम्, उदारता—दानेऽभिनिवेशः ( महते आश्चर्याय इत्यर्थः ) अत्र चातको मेघश्चाऽप्रस्तुतौ, ताभ्यामेव प्रस्तुतयो र्याचकदानिनोः समान कार्यतया प्रतीतिः । इति अप्रस्तुतात् प्रस्तुतप्रतीतिरूपा समासोक्तिः । नवीनास्तु अप्रस्तुत प्रशंसामेवाऽत्र बोधयन्ति । रथोद्धता वृत्तम् ।

अप्रस्तुत प्रशंसा—

“ अप्रस्तुतप्रशंसा स्यादपक्रान्तेषु या स्तुतिः ।
तन्मुखेन प्रस्तुतस्य निन्दा यत्र प्रतीयते ॥ ”

अप्रक्रान्तेषु—अप्रस्तुतेषु, अप्रस्तुतानामित्यर्थः । ( षष्ठ्यर्थे सप्तमी ) यथा—

" पादाहतं यदुत्थाय मूर्द्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥"

( माघः )

अत्र अप्रस्तुतस्य रजसः प्रशंसामुखेन प्रस्तुतस्य अपमानसहिष्णोर्निन्दा प्रतीयते ।

यथा वा—

" सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ।
अन्नैरयत्नसुलभैस्तृणदर्भाङ्कुरादिभिः ॥ "

अत्र मृगाणां सुखजीवनस्याऽप्रस्तुतस्य प्रशंसया प्रस्तुतराजानुवृत्तिजीवनस्य निन्दा प्रतीयते ।

**अप्रस्तुतस्य प्रशंसा—उत्कृष्टगुणस्य कीर्तनम्, अतो निःसृतं तेन प्रस्तुतस्य निन्दा इति नामाऽनुसारि लक्षणं ब्रुवाणस्य नवीनसम्मत लक्षणं समासोक्तावेव अन्तर्भावयतो दण्डिनः काव्यादर्शाल्लक्षणमुल्लिखति—अप्रस्तुतेति । यत्र अप्रक्रान्तेषु—प्रक्रान्ताः प्रस्तावादागताः तेन भवन्तीति तेषु, अप्रस्तुतेषु इत्यर्थः । तद्विषयिणीति भावः ( षष्ठ्यर्थे सप्तमी बोध्या ) या स्तुतिः—गुण कीर्तनम्, तन्मुखेन—अप्रस्तुतप्रशंसाद्वारेण, प्रस्तुतस्य—प्रस्तावादागतस्य निन्दा—अपकर्षः, प्रतीयते—गम्यते ( व्यञ्जनया ) न त्वभिधया बोध्यते, सा अप्रस्तुत विषयिणी स्तुतिः अप्रस्तुतप्रशंसानामानमलङ्कारं परिणमयति ।**

**पादाहतमिति । शिशुपालमुद्दिश्य कृष्णमुत्तेजयतो बलभद्रस्येयमुक्तिः । यत् रजः—धूलिः, पादैः—चरणैः, आहतम्—ताडितम्, सत्**

उत्थाय—उपर्यागत्य, मूर्द्धानम्—(ताडयितुर्जनस्य) शिरः, अधिरोहति—समाक्राम्यति, तत् रजः, अपमानेऽपि—शत्रुकृते तिरस्कारेऽपि, स्वस्थात्—यथापूर्वं शान्तात्, देहिनः—प्राणिनः, वरम्—श्रेष्ठम्, अचेतनमपि परताडनां न सहते किमिति प्राणधारी मादृशः सहिष्यते इति भावः, अतस्त्वया सम्प्रति प्रथमं शिशुपाल एवाऽभिगन्तव्यः। अत्र परामर्श—सभायां रजः—अप्रस्तुतं तस्य च प्रशंसामुखेन अपमानं सोढुर्निन्दा प्रतीतेत्यप्रस्तुतप्रशंसा।

सुखमिति—। सेवावृत्त्या जीवनं वर्त्तयितु र्विषयमभिलक्ष्य निबद्धमिदम्। वनेषु—सर्वसाधारणस्वामिकाऽरण्येषु, परं सेवन्त इति परसेविनः तेन भवन्तीति परसेवनविमुखा इत्यर्थः। अयत्नेन—अनायासेन, सुलभैः—सुखं लब्धुं योग्यैः, तृणदर्भाङ्कुरादिभिः—फलमूलशाकवन्यान्नैः, हरिणाः—मृगाः, सुखं जीवन्ति—निश्चिन्तं प्राणन्ति। अत्र हरिणा अप्रस्तुताः, तत्प्रशंसया च परसेविनां पुंसां निन्दाप्रतीयते इत्यप्रस्तुतप्रशंशा।

नवीनास्तु ' अप्रस्तुतस्य—अप्राकरणिकविषयस्य, प्रशंसा—प्रकृष्टं शंसनं वर्णना। प्रकृष्टत्वञ्च अप्रस्तुतद्वारा प्रस्तुतविषयावगमकत्वम् तदाह मम्मटाचार्य्यः—"अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया।" या प्रशंशा—वर्णना, इत्यर्थः।

### व्याजस्तुतिः—

"व्याजस्तुति र्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा।"

(मम्मटः)

मुखे—आपाततः, अन्यथा—यथाक्रमं स्तुत्यां निन्दायां वा, रूढिः—पर्यवसानम्। स्तुतिपर्यवसायिनी निन्दा, निन्दापर्यवसायिनी स्तुतिश्च व्याजस्तुतिरिति फलितम्। निन्दायाः स्तुतिरूपेण पर्यवसाने व्याजेन स्तुतिरिति व्याजस्तुतिः, स्तुते र्निन्दारूपेण पर्यवसाने व्याजरूपा स्तुतिः। क्रमेण यथा—

"त्यक्त्वा राज्यं गिरमनुसरन् स्त्रीवशान्मूढबुद्धे-
राज्ञो भ्रान्त्वा गहनविपिने हारयन् मुग्धकान्ताम् ।
सख्यं बद्ध्वा कपिभिरसमं लङ्घयन् कीर्तिमग्र्यां
पूर्वेषां वो विलयमनयो हेमलङ्कां किमेतत् ?"

अत्र स्त्रीवशवर्तिनो मूढधियो नरपते र्वचनप्रतिपालनं, पूर्वेषां सगरसुतानां कीर्तिलङ्घनादिकञ्चापाततो निन्देव प्रतिभाति, चरमे तु पितुः प्रतिज्ञा संरक्षिता, दुस्तरं तोयनिधिमुत्तीर्य्य दुःसह-प्रतापो वनिताऽपहारी दशाननो विजितः, समूलमुन्मूलितश्चेत्यहो ! दुष्करं कृतमिति सर्वमेव स्तुत्यां पर्यवस्यतीति निन्दायाः स्तुतिरूपेण पर्यवसाने व्याजस्तुतिः ।

"युक्तं तवैतत् रघुवंशभूपते !
सतां हि सख्युः परिपालनं व्रतम् ।
इतः स्तुतिः का जगदीश ! निर्मला
भवान् यदर्थं न्यवधीन्निरागसम् ॥"

अत्र प्रियबन्धोः संरक्षणमुचितमिति तव सुग्रीवसहायत्वं युक्त-मेवेत्यापाततः स्तुतिरपि, मित्रकार्यार्थे निरपराधस्य जीर्णकलेवरस्य शाखामृगस्य मे हननं सर्वथा गर्हितमेवेति चरमे निन्दायां पर्यवस्यतीति स्तुते र्निन्दायां पर्यवसाने व्याजस्तुतिः ।

व्याजस्तुत्यलङ्कारं मम्मटोक्त्या निरूपयति व्याजेति । यत्र मुखे—आपाततः शब्दोच्चारणसमकालमेवेत्यर्थः, निन्दा—अपकर्षप्रतिपादनम्, स्तुतिः—उत्कर्षकथनम्, यथाशब्दनिवेदितं प्रथमं स्तुतिः स्तुतिरूपेण,

निन्दा निन्दारूपेण प्रतिभाति । किन्तु रूढिः—पर्यवसाने प्रतीतिः कृतविचारे बोध इत्यर्थः, स्तुतिनिन्द्योरिति शेषः, अन्यथा भवति—स्तुतौ निन्दा, निन्दायां स्तुतिः—चेद्भवति तदा व्याजस्तुतिः । निन्दायाः स्तुतौ पर्यवसाने, व्याजेन—निन्दाच्छद्मना स्तुतिः । स्तुतेः निन्दायां पर्यवसाने व्याजरूपा—निन्दारूपा स्तुतिः । इति नामानुकूला व्याजस्तुतिरलङ्कारः । ततो द्विप्रकारेयं स्तुतिपर्यवसायिनी निन्दा, निन्दापर्यवसायिनी स्तुतिश्च । क्रमेण उदाहरणे प्रदर्श्येते—

त्यक्त्वेति—रामं प्रति विदग्धोक्तेः कस्यचिद्भक्तस्य उक्तिरियम् । हे दाशरथे ! इति शेषः । स्त्रीवशात्—कामुकतया कैकेयीवशे वर्तमानत्वात्, मूढा—सदसद्विवेकरहिता, बुद्धिः—मतिर्यस्य तस्य, राज्ञः—दशरथस्य, गिरम्—वनवासादेशम्, अनुसरन्—मानयन्, राज्यं त्यक्त्वा गहनविपिने—निविडवने, भ्रान्त्वा—इतस्ततः परिभ्रम्य, मुग्धकान्ताम्—अल्पवयस्कपत्नीम्, हारयन्—रावणद्वारा चोरयन्, (तस्या हरणे राज्यं परित्यज्य वनमाश्रितस्य तवैव दोषस्य कर्तृत्वमिति भावः) कपिभिः—सुग्रीवादिभिः पशुभूतैः, सह असमम्—मनुजानर्हम्, सख्यम्—मैत्रीम्, बद्ध्वा, पूर्वेषाम्—पूर्वजानां सगरसुतानामित्यर्थः । अग्र्याम्—प्रशस्ताम्, कीर्तिम्—सागररूपामित्यर्थः । (यज्ञीयाश्वमन्विष्यद्भिस्तैः सागरः खनितः, इति पौराणी गाथाऽत्रानुसन्धेया) लङ्घयन्—सेतुना तरन्, हेमलङ्काम्—स्वर्णनिर्मिततदाख्यरावणपुरीम्, विलयम्—विध्वंसम्, अनयः—नीतवान्, इति यत् एतत् किम्, तत्रानुकूलम् ? आपाततो नैव किन्तु पर्यालोचने युक्तमेवेति भावः । अत्र वृत्तिप्रदर्शितदिशा मुखे निन्दा प्रतीयते किन्तु पर्यवसाने स्तुतिरेवागम्यते । इति स्तुतिपर्यवसायिनी निन्दा । मन्दाक्रान्ता वृत्तम् ।

युक्तमिति— । सुग्रीवसहायकत्वेन वालिं शरेण विध्यन्तं रामं प्रति वालिन एवोक्तिः । हे रघुवंशभूपते ! रघुसदृशविवेचकवंशे समुद्भूत राजन् ! (अतस्त्वया औचित्यपालनमेवोपयुक्तमिति ध्वनितम्) एतत्—सुग्रीवपक्षमाश्रित्य मत्कर्मकहननमित्यर्थः । युक्तं

तव उचितमेवेति भावः। तथाहि—सख्युः—मित्रस्य, परिशीलनम्—शत्रुविनाशपूर्वकं रक्षणम्, सतां व्रतम्—कर्तव्यतया नियतम्। हे जगदीश—हे समदर्शित्वेन त्रिभुवनपते (सोल्लुण्ठं सम्बोधनम्) इतः परा निर्मला—स्वच्छा, स्तुतिः का? यदर्थं—मित्रत्वपालनार्थं, निरागसम्,—निरपराधम् मां भवान् न्यवधीत्—शरेण हतवान्। अत्र वृत्तिप्रदर्शितदिशा पूर्वं मित्ररक्षायै कर्तव्यपालनं स्तुतिः, अन्ते निरागसः हननरूपायां निन्दायां पर्यवस्यति। इति निन्दापर्यवसायिनी स्तुतिः। वंशस्थेन्द्रवंशयोः सङ्करः, अतः उपजाति वृत्तम्।

प्रतीपम्—

"प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्।
निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते॥"

(विश्वनाथः)

क्रमेण यथा—

"यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये! तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते॥"

(महाना०)

"मुखं यदि किमिन्दुना? यदि चलाञ्चले लोचने
किमुत्पलकदम्बकैः? यदि तरङ्गभङ्गी भ्रुवौ।
किमात्मभवधन्वना? यदि सुसंयताः कुन्तलाः
किमम्बुवहडम्बरैः? यदि तनूरियं किं श्रिया॥"

(वीरच०)

प्रथमे प्रसिद्धानामुपमावस्तूनामिन्दीवरादीनामुपमेयत्वप्रकल्पनं, द्वितीये इन्दुप्रभृतीनां निष्फलत्वकथनम् ।

उत्कृष्टगुणवत्तया वर्णितमुपमानम्, (उपमानात्) न्यूनगुणवत्तया वर्णनीयम् उपमेयम् । उपमेये उपमानगतो धर्मः प्रदर्श्यते । यत्र तु एतन्नियमपरिहारेण—प्रसिद्धस्य—कविसमुदाये सादृश्यप्रतियोगितया प्रचरितस्य, उपमानस्य—साधारणधर्मतया—प्रसिद्धस्य चन्द्रादेः, उपमेयत्वेन—सादृश्यानुयोगितया, न्यूनगुणत्वेनेति भावः, प्रकल्पनम्—निबन्धनम्, वा (समुच्चये) निष्फलत्वेन—वास्तविकोपमेयेन तत्कार्य-प्रतिपादनेन आवश्यकताराहित्येन, अभिधानम्—प्रतिपादनम्, प्रतीपम्—उपमानापकर्षबोधानुकूलव्यापारस्वरूपम्—नाम अलङ्कारः प्रतिपाद्यते । उपमानापकर्षेण उपमेयगतोत्कर्षोऽत्र गम्यः । स च प्रतिकूलतया कैमर्थक्येन चोपमानकल्पनरूप-विच्छित्तिमूलकः । उपमेयत्वप्रकल्पनं कैमर्थक्येन निषेध प्रतिपादनं, क्रमश उदाहरति ।

यदिति । जानक्या विरहे माल्यवत्पर्वते वर्षर्तुं कथमपि गमयतस्तद्दतुजन्यं प्रियासादृश्यदूरीभवनमसहमानस्य रामस्य उक्तिरियम् । प्रिये ! प्राणाधिके जानकि ! त्वन्नेत्रसमाना—त्वन्नयनसदृशी, कान्तिः—शोभा, यस्य तत् इन्दीवरम्—नीलकमलम्, सलिले—जले, मग्नम्—ब्रूडितम्, वर्षासु कमलानि गलन्तीति प्रसिद्धिः । तवमुखच्छायानुकारी—त्वदाननसमानकान्तिशाली, चन्द्रः, मेघैः—वारिदैः, अन्तरितः—आच्छादितः, त्वद्गमनानुसारिणी—त्वद्गत्यनुकारिणी, गतिः—सञ्चरणभङ्गिः, येषां ते राजहंसाः, गताः—प्रारब्धायामेव प्रावृषि मानसं प्रति प्रस्थिताः । इत्येतै र्हेतुभिः त्वत्सादृश्यविनोदमात्रमपि त्वन्नयनमुखगतिसादृश्यदर्शनजन्यचित्तसन्तोषमात्रमपि, दैवेन—विधिना, प्रतिकूलेनेत्यर्थः, न क्षम्यते । त्वत्तुल्यशोभादर्शनार्थमवसरमपि दातुं नेष्यते । अत्र उपमानानाम् इन्दीवरचन्द्रहंसानां नयनमुखगतिसाम्येन वर्णनीयतया उपमेयत्वं कल्पितम्, यतोऽत्र प्रतीपम् ।

मुखमिति— । श्रीसीतां पापबुद्ध्या चिन्तयतो विरहमनुभवतो रावणस्य दुर्भावगर्भासूक्तिरियम् । यदि मुखं सीताया इति शेषः, विद्यते तदा इन्दुना—चन्द्रेण, किम् ? न किमपि प्रयोजनमित्यर्थः । यदि—चलाञ्चले—चञ्चलापाङ्गे, लोचने—तदीये नयने स्तः तदा उत्पलकदम्बकैः—कमलवृन्दैः किम् ? सति सूर्ये कः प्रदीपप्रकाशमिच्छतीति भावः । यदि तरङ्गस्य—लहर्याः भङ्गिः—कुटिलतया गतागतविधानम्, ययोस्ते भ्रुवौ यदा तदा आत्मभवधन्वना—कामधनुषा, किम् ? तस्य प्रयोजनं तेनैव निष्पादितमित्यर्थः । यदि सुसंयताः—मनोज्ञतया निबद्धाः, कुन्तलाः—शिरोरुहाः, तदा अम्बुवहडम्बरैः, मेघसमूहैः ( नीलैः ) किम् ? नैव प्रयोजनमस्ति । यदि इयं तनूः—कायः, तदा श्रिया—लक्ष्म्या, किम् ? अत्र इन्दूत्पलादीनामुपमानानां कैमर्थक्येन निष्फलत्वस्याऽभिधाने प्रतीपमलङ्कारः ।

अर्थश्लेषः—

" शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् ।"

( विश्वनाथः )

स्वभावादेकार्थैरिति शब्दश्लेषात्, वाचनमिति च ध्वनेर्व्यवच्छेदः । यथा—

" खलस्य कण्टकस्येव द्विविधैव प्रतिक्रिया ।
उपानहा वक्त्रभङ्गो दूरतो वा विवर्जनम् ॥ "

अन्वयव्यतिरेकाभ्यां शब्दनिष्ठतया शब्दपरिवृत्त्यसहिष्णुत्वं शब्दश्लेषत्वं, शब्दालङ्कारे प्रतिपाद्य सम्प्रति शब्दपरिवर्तनेऽपि स्वभावतोऽर्थद्वयस्य सत्तयाऽर्थश्लेषं व्याख्याति । स्वभावात्—स्वरूपतः, एकाऽर्थैः—न तु द्व्यर्थकैः, ( अन्यथा शब्दश्लेषप्रसङ्गः ) अनेकार्थस्य—एकाधिकाऽर्थस्य, वाचनम्—अभिधया बोधनम्, न तु संयोगादिभिः नियन्त्रितया व्यञ्जनया

प्रतिपादनम् श्लेषः । ध्वनौ "संयोगो विप्रयोगश्च—" इति नियमात् प्रकरणविशेषे नियन्त्रितोऽर्थः, अर्थान्तरं व्यञ्जनया व्यनक्ति । अत्र अनियन्त्रितयोर्द्वयोरप्यर्थयोः, स्वभावादेकार्थशब्दद्वारा प्रतिपादनम् ।

खलस्येति— । खलस्य—दुष्टस्य, कण्टकस्येव द्विविध एव प्रतीकारः, एकः उपानहा—चर्मनिर्मितपादवर्मणा, मुखभङ्गः, वा—अथवा, दूरतः—विवर्जनम् सङ्गतित्यागः—तत्पूर्णपथत्यागश्च । अत्र 'प्रतिक्रिया' विवर्जनम्-प्रभृतिशब्दाः स्वरूपत एकार्था अपि द्विविधमर्थं बोधयन्तीति अर्थश्लेषः । इव शब्दोपादानेन उपमाऽपि ।

सहोक्तिः—

" सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् । "

यथा—"पुरोपनीतं नृप ! रामणीयकं
द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं
पैरति कार्श्यं यशसा समं वपुः ॥"

अत्र वपुर्यशश्चोभयमपि क्षीयते इति सहार्थबलाद्बोध्यते ।

यत्र एकम्—( एकार्थवाचकमित्यर्थः ) पदं सहार्थस्य—सहितार्थप्रतिपादकस्य 'साकं सत्रा समं सह' इत्यादिपदान्वयस्य, बलात्—द्विवाचकम्—द्व्यर्थाभिधायकम् सा सहोक्तिः—सहभावस्योक्तिः । यथा 'प्रज्ञया सह विस्तारमाययौ वक्षः' अत्र विस्तारप्राप्तिरूपः एकवक्षोरूपार्थान्वयः सहशब्दबलेनैव प्रज्ञाकर्तृकं विस्तारप्रापणं प्रतिपादयति । प्रथमान्तो विशेष्यतया प्रधानीभूतः साक्षादेव बोध्यते 'सहयुक्तेऽप्रधाने' इति सहार्थे तृतीयान्तो विशेषणीभूततया अप्रधानीभूतः, एकार्थान्वय आक्षिप्यते । एवं 'रामकृष्णौ सहैव गच्छतः' अत्र उभयोरप्यन्वये वाच्यतया नाऽलङ्कारः । सहोक्तिरपि एककालादिक्रि-

यान्वयगर्भा एककालिकाध्यवसानरूपाऽतिशयोक्तिमूलैव। तेन 'प्रविशति विदूषकेण समं राजा दुष्यन्तः' अत्र अध्यवसानराहित्येन चमत्कारशून्यतया नैव सहोक्तिः।

पुरेति—। वनेचरमुखात् श्रुतदुर्योधनशासनपद्धतिः शत्रूत्कर्षेण ज्वलद्धृदया द्रौपदी युधिष्ठिरमुत्तेजयितुं प्राक्तनां दशां स्मारयन्ती साम्प्रतिकीं दुर्दशां ब्रवीति। हे नृप! हे लोकपालक! पुरा—स्ववैभवसमये यदेतद् वपुः—शरीरम्, द्विजातिशेषेण—ब्राह्मणभोजनावशिष्टेन, अन्धसा—अन्नेन, रामणीयकम्—सुपुष्टतया सुन्दरत्वम्, उपनीतम्—प्रापितम्, अद्य सम्प्रति, तदेव वन्यफलाशिनः—वनलभ्यकन्दफलादिभोजिनः, तव वपुः—शरीरम्, यशसा सह कार्श्यम्—कृशताम्—क्षीणत्वम्, एति—प्राप्नोति। यथा तादृशसम्पत्तिशालिनस्तव, अनया दुर्दशया शरीरं क्षीयते तथैव यशोऽपीति भावः। अत्र सहार्थबलात् वपुः क्षीयते तत्समकालं यशोऽपीति अध्यवसानमूलतया अवगमेन सहोक्तिरलङ्कृतिः।

काव्यलिङ्गम्—

"हेतो र्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्।"

(विश्वनाथः)

वाक्यस्य पदार्थस्य वा हेतुरूपेणोक्तौ काव्यलिङ्गम्।

यथा—

"रे हस्त! दक्षिण! मृतस्य शिशो र्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम्।
रामस्य गात्रमसि दुर्भरगर्भ-खिन्न-
सीता-विवासन-पटोः करुणा कुतस्ते॥"

(उत्तरच०)

अत्र करुणाया अभावे "रामस्य गात्रमसि" इति वाक्यं, "दुर्भरगर्भखिन्नसीताविवासनपटोः" इति पदार्थश्च हेतुः ।

कार्ये नियतवृत्ति हेतुः । इममेव सर्वसिद्धं हेतुं काव्ये निष्पादकतया वाक्यगतत्वेन पदार्थगत्वेन च किञ्चिद्विच्छित्तिप्रतिपादनाय निबध्नाति चेत् काव्यलिङ्गमलङ्कारो भवति । तदेवाह हेताविति । हेतोः—निष्पादककारणस्य, वाक्यत्वे—वाक्यगतत्वे एवं पदार्थगतत्वे च काव्यलिङ्गम्—काव्याभिमतं लिङ्गम्—हेतुः । काव्यविशेषणेन 'पर्वतोऽयं वह्निमान् धूमात्' इति तर्कप्रसिद्धलिङ्गव्यावर्तनम् । विच्छित्तिमूलकत्वे 'दण्डेन घटः' अत्र नाऽलङ्कारः । हेतुर्यद्यपि त्रिधा भवति—ज्ञापकः, समर्थकः, निष्पादकश्च । तत्र ज्ञापकोऽनुमानस्य, समर्थकोऽर्थान्तरन्यासस्य: निष्पादकश्चाऽस्य विषयः ।

रे हस्तेति— । दण्डकारण्ये तपस्यन्तं शूद्रं मुनिं मृतद्विजपुत्रजीवनाय जिघांसो रामस्य खेदगर्भं वचनम् । रे दक्षिणहस्त ! ( दक्षिणपदस्यानुकूलरूपार्थे पुनरीदृगयोग्यकर्मप्रवृत्तिर्नितरामनुचितेति ध्वनितम् ) मृतस्य ब्राह्मणपुत्रस्य जीवातवे—पुनर्जीवनाय, शूद्रमुनौ कृपाणं—खड्गम्, विसृज—प्रहर । दुर्भरेण—वोढुमशक्येन, गर्भेण खिन्नायाः ( एतेन त्यागस्य नितान्तमनौचित्यं सूचितम् ) सीतायाः, प्रवासने—बहिष्करणे, पटोः—चतुरस्य, रामस्य ( निर्दयस्येति तात्पर्यम् ) गात्रमसि—अङ्गमसि, तव करुणा दया कुतः, नास्त्येवेति भावः । अतः शूद्रमुनौ कृपाणत्यागे न सङ्कोचः ! स्यात् । अत्र 'करुणाया अभावः' शूद्रमुनौ कृपाणप्रहारे हेतुः, निष्करुणत्वे दुर्भरगर्भ—इति समस्तपदार्थः, एवं रामस्य गात्रमसीति निर्दयताऽतिशयव्यञ्जकं वाक्यं हेतुत्वेनोपनिबद्धं काव्यलिङ्गं जनयति ।

**विभावना—**

"विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ।"

( विश्वनाथः )

यथा—

" अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥ "

( कुमार स० )

अत्र मेघोदय—कुसुमरूप—कारणयोरभावेऽपि वर्षफलरूपकार्य-योरभिधानम् ।

कारणं कार्यनियतपूर्ववृत्ति भवति । इति नियमेन हेतुं विना कार्यं नोत्पद्यते इति नियतम् । नहि कुलालदण्डादि विना घटो निर्मीयते न वा अग्निमन्तरेण धूम उद्भवति । किन्तु एतन्नियमपरिहारपूर्वकं किञ्चिच्चमत्कारप्रदर्शनाय—'यत्—यदा, हेतुं विना—निमित्तं विना, कार्योत्पत्तिः—नैमित्तिकोद्भवनम्, प्रतिपाद्यते तदा विभावना—विभाव्यते—प्रकटीक्रियते कारणं विना कार्यम् अनया, इति—विभावनाख्योऽलङ्कारः ।

अपेति— । अतर्कितम्—अविभावितम्, एव उपपन्नम् सहसा प्राप्तमित्यर्थः । वः—भवताम्, दर्शनम् अपगतः—दूरीभूतः, मेघोदयो यस्मिन् तत् वर्षम्—वृष्टिः, अदृष्टकुसुमम्—कुसुमदर्शनं विनैवेत्यर्थः फलम् मे—मम, प्रतिभाति । यथा वर्षफलादि मेघोदयकुसुमदर्शनराहित्येन अनुपपन्नं तथा अतर्कितं भवतां दर्शनमपि मह्यं प्रतीयते । सम्प्रति असम्भवि भवद्दर्शनमद्भाग्येनैव जातमित्यागतम् । कारणाभावेऽपि कार्यस्योत्पत्तिरुदितेति विभावना ।

विशेषोक्तिः—

" सति हेतौ फलाभावे विशेषोक्तिः " त्रिधा च सा ।
उक्त्यनुक्त्यो र्निमित्तस्याप्यचिन्त्यत्वे च कुत्रचित् ॥

उक्तनिमित्ता, अनुक्तनिमित्ता, अचिन्त्यनिमित्ता चेति सा त्रिधा । क्रमेण यथा—

" धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः ।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥ "

अत्र धनादिरूपहेतुसत्त्वेऽपि उन्मादादिरूपफलाऽभावः, महामहिमशालित्वञ्चात्र निमित्तमुक्तम् । अत्रैव चतुर्थपादे " कियन्तः सन्ति भूतले " इति पाठे निमित्तमनुक्तं भवति ।

" स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरताऽपि तनुं यस्य शम्भुना न हृतं बलम् ॥ "

अत्र तनुहरणेऽपि बलाहरणे निमित्तमचिन्त्यम् ।

**कारणसत्त्वे कार्यसत्ता इत्यन्वयव्यतिरेकितया सति कारणे तत्फलाऽभावोऽलौकिकः, नहि विद्यमाने भानौ प्रकाशस्याऽभावो भवति । यत्र यत्र नियममिमं व्यतिक्रम्य—हेतौ—कारणे, सति—विद्यमाने, फलस्य—हेतुनिमित्तस्य कार्यस्य, अभावे विशेषोक्तिः—विशेषेण—सामान्यनियमतोऽतिरिक्तेन, उक्तिः—अभिधानम् । तदाख्योऽलङ्कारः । सा च निमित्तस्य—फलाभावेकारणीभूतस्य, उक्तेः—अभिधानात्, अनुक्तेः, एवं कुत्रचित् तस्य अचिन्त्यत्वे त्रिधा—उक्तनिमित्ता, अनुक्तनिमित्ता, अचिन्त्यनिमित्ता चेति त्रिप्रकारा, विद्यते ।**

**धनिन इति । ते—महामहिमशालिनः—महाप्रभावयुक्ताः, ( निमित्तमिदम् ) धनिनोऽपि निरुन्मादाः—अनुद्दण्डाः, युवानोपि—तरुणवयसोऽपि, अचञ्चलाः धीराः, प्रभवोऽपि—प्रभुताशालिनोऽपि, अप्रमत्ताः—सावधानाः, सन्तीति शेषः । अत्र धनमुन्मादस्य, युवत्वं चाञ्चल्यस्य, प्रभुत्वं प्रमादस्य, हेतुभूतानि उक्तान्यपि—महामहिमशालित्वरूपनिमित्तोपादानेन उक्तनिमित्ता विशेषोक्तिः । ' महामहिमशालिनः ' इति स्थाने ' कियन्तः सन्ति भूतले ' इति निमित्ताऽनुपादाने अनुक्तनिमित्ता सैव ।**

स एक इति । स एकः—सहायरहितः, कुसुमायुधः—पुष्पबाणः कन्दर्पः, त्रीणि जगन्ति जयति स्ववशमानयति । यस्य तनुम्—कायम्, हरता—भस्मशात्—कुर्वताऽपि, बलम्—त्रिभुवनोन्मथनरूपं सामर्थ्यम्, न हृतम् । अत्र ( तनुहरणे ) हेतौ उक्तेऽपि ( बलाहरणं ) फलं नोक्तम् ।

विरोधः—

" विरोधः सोऽविरोधेऽपि विरुद्धत्वेनयद्वचः । "

( मम्मटः )

वस्तुनोऽविरोधेऽपि विरुद्धयो रिव धर्मयो र्यदभिधानं, स विरोधः । अयमेव विरोधाऽभास इत्युच्यते । व्यधिकरणयोरिव धर्मयोः समानाधिकरण्येन निर्देशो विरोधः । धर्मश्चात्र जातिगुणक्रियाद्रव्यरूपः । उदाहरणम्—

"अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥"

( रघु० )

"जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥"

( कुमार० )

प्रथमे भगवतः प्रभावस्याऽतिशयित्वादापाततः प्रतीयमानस्य विरोधस्य समाधानम् । द्वितीये नञ्तत्पुरुषसमासे विरोधः, बहुव्रीहिणा परिहारः ।

अविरोधेऽपि—वस्तुतः पर्यालोचने विरोधाऽभावेऽपि, यद् विरुद्धत्वेन—आपाततो विरोधवत्त्वेन यद्वचोऽभिधानम्, सः—विरोधाऽभासने एव विच्छित्तिः, विरोधो नाम अलङ्कारः। तदुक्तं—'विरुद्धाभासत्वं विरोधः आभासत्वञ्च उच्चारणश्रवणसमकालं तत्तथाभासनं प्रतीतिपर्यवसाने तत्परिहारः। एतस्यैव 'विरोधाऽभास' इत्यपि व्यक्तार्थं नामान्तरम्। ननु को नाम विरोधः? इत्यत आह—व्यधिकरणयोः—एकत्र निष्ठत्वाऽभाववतोः, इव (इव पदमर्थान्तरनिष्ठतया वस्तुत एकाधिकरणयोरेवेति ध्वनयति) समानाधिकरण्यं—एकनिष्ठतया, प्रतिपादनं विरोधः। यथा 'कुपतिमपि कलत्र—वल्लभम्' अत्र कुत्सितपतित्वस्य कलत्रवल्लभत्वस्य स्पष्टं वैयधिकरणं नहि असत्स्वामिने कान्ताप्रियत्वं सम्भवति। अतस्तदिव नतु वस्तुतः ('कोः—भूमिः, पतिम्' इत्यर्थेन सम्भवत्येवसमानाधिकरणम्) समानाधिकरण्येन एकस्मिन्नेव नृपतौ द्वयो विंशेषणयोरुपादानमतो विरोधः, किन्तु अर्थान्तरपर्यालोचने स एव विरोधो नितरां चमत्कारमावहतीत्यलङ्कारः। विरोधश्च—विरुद्धधर्ममूलकः धर्मश्चात्र चतुर्विधः। तदुक्तम्—"जातिश्चतुर्भिर्जात्याद्यै र्गुणो गुणादिभिस्त्रिभिः। क्रिया क्रियाद्रव्याभ्यां द्रव्यं द्रव्येण वा मिथः॥" इत्येवं दशधा विरोधः।

अजस्येति—। देवकर्तृकविष्णुस्तुतिरियम्। (भगवन्!) अजस्य—न जायते इति तस्य, जन्म गृह्णतः, (अवतारे मातुर्गर्भादुत्पन्नः, इति भावः) निरीहस्य—निरभिलाषस्य, हतद्विषः—नाशितशत्रोः, (निरीहस्य रिपुवधे प्रवृत्ति विंरुद्धा भूभारहारितया तथाविधं चेष्टमानस्य युक्तता इति तत्परिहारः) स्वपतः—शयानस्य, (पुनर्विरुद्धत्वेन) जागरूकस्य—जाग्रतः, इत्थं विरुद्धधर्मणस्तव याथार्थ्यं—तत्त्वं, को वेद न कोऽपि जानातीत्यर्थः। अत्र परस्परं विरुद्धस्याऽपि पर्यालोचनेऽविरोध इति तदाख्योऽलङ्कारः।

जगदिति—। विरोधगर्भां ब्रह्मस्तुतिं विदधतां देवानामुक्तिः। जगतां योनिः—उत्पत्तिस्थानम्, अपि स्वयमयोनिः—पर्यवसाने स्वयमु-

त्पन्नः ( न विद्यते योनिः उद्भवो यस्य तथाविधः ) जगदन्तः—संसार-संहारकः, किन्तु स्वयं निरन्तकः—अन्तकादतिरिक्तः (वस्तुतः, अन्तात्—विनाशात्, निष्क्रान्तः ) जगतामादिः स्वयम् अनादिः, आदिर्न भवतीति ( वास्तिवकत्वं तु न विद्यते आदि र्यस्य सः ) जगदीशः—त्रिभुवनपतिः, अथाऽपि निरीश्वरः, ईश्वरादतिरिक्तः, इति विरोधः, अविद्यमानस्वामिकः स्वयं प्रभुत्वादिति तत्परिहारः । अत्र सर्वत्र नञ् तत्पुरुषेण न योनिः--अयोनिः, इत्येवं विरोधः समुत्थितः, 'न विद्यते योनि र्यस्य' इति बहुव्रीहिणा स निवारितः ।

विषमम्—

गुणक्रिये वा यत्स्यातां विरुद्धे हेतुकार्ययोः ।
यद्वारब्धस्य वैकल्यमनर्थस्य च सम्भवः ।
विरूपयोः सङ्घटना या च तद्विषमं मतम् ॥"

यत्र कारणगुण एकः, कार्यगुणस्तद्विपरीतः, क्रिया वा द्वयो र्विरुद्धा, यत्र न केवलमारब्धस्य वैफल्यम्, अनर्थापत्तिश्च, यत् विषमयो र्मेलनश्च भवेत्, तदेवं चतुर्धा विषमम् । क्रमेण यथा—

"सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु
यशस्त्रिलोकाऽभरणं प्रसूते ॥"

अत्र कारणरूपाऽसिलतायाः "कारणगुणाः कार्यगुणानारभन्ते" इति स्थिते विरुद्धा शुक्लयशस उत्पत्तिः ।

"आनन्दममन्दामिमं कुवलयदललोचने ! ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयाति नितरां शरीरं मे ॥"

अत्र त्वमानन्दं ददासि त्वज्जनितो विरहस्तु तापयातितरामिति हेतुकार्ययो विंरुद्धा क्रिया।

"अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः॥

अत्र न केवलं कांक्षितधनलाभो माभूत्, प्रत्युत क्षारवारिभिर्वदनपूरणरूपानर्थपातः।

"अनृतां गिरं न गदसीति जगति पटहै र्विघुष्यसे।
निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता॥"

अत्र सत्यप्रख्यापनाऽसत्यसमाचरणयो र्विरूपयोः सङ्घटना।

अननुगुणसम्बन्धनिबन्धनात्मकं विषमनामानमलङ्कारं विवेचयति—गुणक्रिये इति। यो गुणः कारणे स एव कार्ये स्वभावतो दृश्यते "कारणगुणाः कार्यगुणानारभन्ते" इत्युक्तेः। नहि कृष्णमस्या अङ्कितमक्षरं रक्तं भवति। एवं क्रियाऽपि हेतुकार्ययोः सदृशी एवोचिता। इत्याद्यनुकूलसम्बन्धपरिहारपूर्वकं यत्र—हेतुकार्ययोः—निमित्तनैमित्तिकयोः, गुणः क्रिया च, विरुद्धे—प्रतिकूले, स्याताम्, इदं विपरीतगुणं विपरीतक्रियमिति द्विप्रकारं विषमम्। यद्वा—पुनर्वा, आरब्धस्य—प्रारम्भविषयीकृतकार्यस्य, वैफल्यम्—फलाभावः, न केवलं तावदेव किन्तु अनर्थस्य—तद्विरीतत्वेन अचिन्तितानिष्टस्य, सम्भवः, उत्पत्तिः, इदं तृतीयं विषमम्। या च—या पुनः, विरूपयोः—असदृशयोः सङ्घटना—एकत्र स्थापनं साऽपि चतुर्थं विषमम्। अनुकूलसम्बन्धः समं तन्न भवतीति विषमं नामाऽलङ्कारः। पूर्वोक्तदिशा चतुष्प्रकारं क्रमशः श्लोकचतुष्टयेनाऽधोनिबद्धेन प्रदर्श्यते।

सद्य इति। कस्यचिद्राज्ञः प्रशंसायाम्—यस्य—नृपतेः, तमालतरुवत् नीला—श्यामा, कृपाणलेखा—खड्गधारा, रणे रणे—प्रति सङ्गरं,

करस्पर्शमवाप्य—अतिशयप्रभावशालिनो राज्ञो हस्तयोः स्पर्शमासाद्य, शरदिन्दुपाण्डु—शारदचन्द्रवदुज्ज्वलम् , त्रिलोक्याः—भुवनत्रयस्य, आभरणम्—( शुभ्रतया हेतुना ) अलङ्कारत्वेनाच्छादनम्, यशः—कीर्तिम् प्रसूते—जनयति । इति महत् चित्रम् ! अद्भुततमम् !! अत्र कारणीभूताया नीलायाः कृपाणलेखायाः नीलो गुणः कार्यभूते यशसि नैव दृश्यते प्रत्युत तद्विपरीतः शुक्ल एव गुणः । अतोऽत्र विषमम् । उपजाति वृत्तम् ।

आनन्दमिति । हे कुवलयदल लोचने—पुण्डरीकपत्रनेत्रे ! त्वम् इमं संयोगजन्यम्, अमन्दं—प्रचुरम्, आनन्दम् ददासि । पुनः त्वयैव जनितः—विहितः, विरहः, से मम शरीरं तापयतितराम्—अतिशयेन दहति । अत्र कारणकार्ययोः क्रियायाम् आनन्दतापप्रदानरूपायाम् , विरुद्धता ।

अयमिति— । अयं रत्नाकरः—रत्ननिधिः, इति सागरः, धनाशया—धनलाभाकांक्षया, असेवि—सेवितः, किन्तु धनं दूरे तिष्ठतु, वदनम्—मुखम् , क्षारवारिभिः—लवणाक्तसलिलैः, अपूरि—पूरितम् । अत्र आरब्धस्य धनलाभस्य—न केवलं वैकल्यं प्रत्युत क्षारजलेन मुखपूरणरूपस्यानर्थस्यैव सम्भवः । इत्यनर्थोत्पत्तिरूपं तृतीयं विषमम् ।

अनृतामिति— । राजसूययजनेऽधिपूजितं श्रीकृष्णमभिलक्ष्य शिशुपालस्य युधिष्ठिरं प्रत्युक्तिः । हे युधिष्ठिर ! अनृताम्—मिथ्याभूताम्, गिरम्—वाणीम्, न वक्षीति संसारे पटहैः—तदाख्यवाद्यैः, ( सोद्घोषमित्यर्थः ) विघुष्यसे—घोषणाविषयीक्रियसे । अथ—तत्प्रतिकूलतया, निन्द्यम्—गोपालसुनुत्वादिना निन्दनीयम्, हरिम्—कृष्णम्, अर्चयतः— पूजयतः, तव असत्यता कर्मणैव ( नतु केवलं वाचा ) विकसति—प्रकटीभवति । अत्र सत्यघोषणाऽसत्याचरणयोर्नितरां विरूपयोः सङ्घटनया विरूपसङ्घटनात्मकं विषयम् ।

असङ्गतिः—

“ कार्यकारणयो र्भिन्नदेशतायामसङ्गतिः । ” ( विश्वनाथः )

यथा—

" अहो खलुभुजङ्गस्य विचित्रोऽयं वधक्रमः ।
अन्यस्य दशति श्रोत्रमन्यः प्राणै र्विमुच्यते ॥ "

यद्देशं कारणं तद्देशमेव कार्य्यं भवतीति निश्चितम् । एकत्र क्षेत्रे उप्तं बीजं नाऽपरत्र उद्भवति । यत्र कामपि विच्छित्तिं प्रकाशयितुं नियममिममुल्लङ्घयति तत्र अर्थात्—'कार्यकरणयोः—नैमित्तिकस्य निमित्तस्य च भिन्नदेशतायाम्—एकाधिकरणाऽभावे, उचितसङ्गतिराहित्येन असङ्गतिनामाऽलङ्कारः ।

उदाहरति अहो इति । भुजङ्गस्य—विटस्य ( सर्पस्याऽपीतिध्वनितं प्रकरणेनैकत्र नियन्त्रितेऽपि ) अयं वधक्रमः—मारणरीतिः, विचित्रः—आश्चर्यभूतः, खलु । तथा हि । श्रोत्रम्—कर्णम्, (पिशुनतयेति भावः ) अन्यस्य—अपरजनस्य, दशति सविषीकरोति, किन्तु ( द्विजिह्वतासाफल्येन ) अन्यः—अनपराद्धः प्राणैर्विमुच्यते—प्राणान् जहातीत्यर्थः । पिशुनः कस्यचन कर्णौ पूरयन् कस्यापि नाशं विधत्ते । अत्र प्राणवियुक्तिरूपस्य कार्यस्य तन्निमित्तस्य दंशनरूपकारणस्य च नैकदेशता, अथाऽपि तत्वतः कमपि चमत्कारमेवावहति । चमत्कारशून्यत्वे नायमलङ्कारः । ' महानसे अग्निः पर्वते धूमः ' इति केवलमसङ्गतमुपहासायैव ।

कारणमाला—

" परं परं प्रति यदा पूर्वपूर्वस्य हेतुता ।
तदा कारणमालास्यात् " दर्पणे समुदीरिता ॥

यथा—

" जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।

गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥"

यदा—यस्मिन्भणितिप्रकारे पूर्वपूर्वस्य—प्रथमतया मुहुर्मुहुः वर्तमानस्य पदार्थस्य, परं परं प्रति—उत्तरोत्तरं निबद्धं पदार्थं प्रति हेतुता—निमित्तत्वम्, भवति तदा मालारूपेण कारणानां ग्रथिततया कारणमाला नामाऽलङ्कारः। साहित्यदर्पणे विश्वनाथेन प्रतिपादिता।

उदाहरणं जितेन्द्रियत्वमिति। जितेन्द्रियत्वम्—इन्द्रियनिग्रहः विनयस्य—नम्रीभावस्य, कारणम्—हेतुः, ('ध्यायतो विषयान्पुंसः, सङ्गस्तेषूपजायते। सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते॥' इति विषयिणामेव उद्दण्डतादि क्रोधाभिमानमूलकं जायते। इति प्रत्युदाहरणम्।) गुणप्रकर्षः—गुणबाहुल्यम्, विनयादवाप्यते, विनय एव तदुत्पत्तौ कारणीभूत इत्यर्थः। गुणप्रकर्षेण जनः—लोकः, अनुरज्यते, गुणिनि अनुरक्तो भवति। सम्पदः—धनादीनि, जनानुरागः लोकप्रेमा, एव प्रभवः—उत्पत्तिस्थानम्, यासां ताः सन्तीत्यर्थः। अत्र क्रमशः पूर्वं पूर्वं परस्य परस्य कारणमेव सञ्जातमिति कारणमालाऽलङ्कारः।

सारः—

"उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः।"

(मम्मटः)

यथा—

'राज्ये सारं वसुधा, वसुधायां पुरं, पुरे सौधम्।
सौधे तल्पं, तल्पे वराङ्गनाऽनङ्गसर्वस्वम्॥"

उत्तरोत्तरम्—पूर्वापेक्षया परतोऽधिकं यथा तथा, परावधिः—परः—उत्तमतयाऽन्तिमः, अवधिः—मर्यादा यस्य तादृशः उत्कर्षः—पदार्थप्रकर्षः, सारः—सारतया तदाख्योऽलङ्कारो भवेत्।

राज्ये इति । राज्ये—राजविभवे, वसुधा—पृथ्वी, एव सारम्—मुख्यभूतं वस्तु । वसुधायां पुरम्—उद्यानरङ्गगृहपण्यवीथीप्रभृतिसमन्वितं नगरम्, सारम् । तत्राऽपि सौधम्—सुधया—रञ्जनद्रव्येण लिप्तं भवनम्, भवनेऽपि तल्पम्—शय्या, शय्यायामपि अनङ्गसर्वस्वम्—कामदेवसर्वसम्पत्तिरूपा, वराङ्गना—सुन्दरीवनिता, सारभूतं वस्त्वित्यर्थः । अत्र क्रमश उत्तरोत्तरमुत्कर्षो यावदवधि निर्धारितः । अतः सारो नामाऽलङ्कारः ।

एकावली—

पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम् ।
स्थाप्यतेऽपोह्यते वा चेत् स्यात्तदैकावली द्विधा ॥"

( विश्वनाथः )

पूर्वं पूर्वं यथोत्तरवस्तुनो विशेषणत्वेन यत्स्थापनं निषेधो वा सम्भवति सा द्विधा बुधैरेकावली कथ्यते । क्रमेणोदाहरणम्—

"सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् ।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं मधुवर्षि च ॥"

अत्र सरसोऽम्भोजं, तस्य भृङ्गम्, इत्यादिक्रमेण विशेषणं विधीयते ।

"न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः ॥"

( भट्टिकाव्यम् )

अत्र क्रमेण पूर्वपूर्वस्य निषेधः ।

स्याच्चेत् पूर्वं पूर्वं वस्तु प्रति परं परम्—उत्तरमुत्तरं वस्तु, विशेषणत्वेन—विशेषणभावेन, स्थाप्यते—निबद्ध्यते, अपोह्यते—निषिद्ध्यते (विशेषणतयैवेति भावः) तदा द्विधा पूर्वोक्तदिशा स्थापनरूपा निषेधरूपा एकावली—एकयष्टिकानाम्ना हारप्रकारः, सादृश्यात् तन्नामाऽलङ्कारः।

सर इति—। सरः—सरोवरः, विकसितानि—विकस्वराणि, अम्भोजानि—कमलानि यत्र तादृशम्, अम्भोजम्-भृङ्गैः—भ्रमरैः, सङ्गतम् अन्वितम्, भृङ्गाः सङ्गीतेन सहिताः, सङ्गीतम्—तालसंयुक्तस्वरसामञ्जस्यरूपम्—अत्र गुञ्जितम्, मधुवर्षि—नितरां मधुरं यत्र वर्तते। अत्र क्रमशः पूर्वं पूर्वं प्रति परं परं विशेषणत्वतः स्थापनरूपा एकावली।

न तज्जलमिति। भट्टिपद्यमिदम्। तत् जलं न यत् सुचारूणि—सुन्दराणि, पङ्कजानि—कमलानि यत्र तत् न, तत् पङ्कजं न यत् अलीनषट्पदम्—भ्रमरमण्डितं न। असौ षट्पदः—भ्रमरः न यः कलम्—अव्यक्तमधुरम्, न जुगुञ्ज न गुञ्जितवान्, तत् गुञ्जितमपि अकिञ्चित्, यत् मनो न जहार—चित्तं न हृतवत्। अत्र क्रमशः पूर्वं पूर्वं प्रति परं परं विशेणत्वे निषिद्ध्यते अतो निषेधरूपा एकावली।

अर्थापत्तिः—

"दण्डापूपिकयाऽन्याथागमोऽर्थापत्तिरिष्यते।"

मूषिकेण दण्डो भक्षित इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीत्येष न्यायो दण्डापूपिका, तयाऽर्थान्तरबोधनम् अर्थापत्तिः।

यथा—

"विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम्।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु॥"

(रघु०)

'अतिकाठिनं लौहमपि तापेन गलितं भवतीति तदपेक्षया

अतिसुकुमारस्य मनुष्यहृदयस्य गलनं सुतरामायातीत्यर्थापत्तिः ।

इत्यलङ्कारविवेको नाम अष्टमशिखा ।

चमत्कारितया लौकिकन्यायसिद्धमलङ्कारं—प्रतिपादयति दण्डाऽ-पूपयोर्भावः—दण्डापूपिका ( भावे वुञ् दीर्घाभावश्च ) तया तदाख्य-न्यायेनेत्यर्थः । दण्डापूपिकान्यायस्वरूपन्त्विदम् । मूषकेण यो दण्डो भक्षितस्ततोऽपूपभक्षणं नितरांतस्याऽभीष्टं स्वयमेव अर्थादागतम् । एवमेत्र एतन्न्यायसादृश्येन दुष्करे वस्तुनि प्रतिपादिते सुकरस्य वस्तुनः प्रतिपादनं तत्र चमत्कारितयाऽलङ्कारत्वम् । तदाह—दण्डापूपिकया न्यायेन अन्या-र्थस्य—अप्रतिपादितपदार्थस्य, आगमः—स्वयमापतनम्, अर्थापत्तिः—अर्थस्य ( अनुक्तस्य ) आपत्तिः—आयतनम्, तदाख्योऽलङ्कारः ।

विललापेति—दिव्यमालासंस्पर्शेन दिवंगतप्राणाया इन्दुमत्या विरहे विलपतोऽजस्य वर्णनम् । सहजाम्—स्वाभाविकीम्, अपि ( एतेन त्यागा-क्षमत्वं ध्वनितम् ) धीरताम्—धैर्य्यम्, अपहाय—दूरीकृत्य, सः—अजः, बाष्पेण—शोकजनितोच्छ्वासेन, गद्गदम्—क्षीणस्वरम्, अव्यक्ताक्षर-मिति भावः । रुद्धकण्ठं यथा तथा विललाप—इन्दुमतीमभिलक्ष्य नाम-ग्राहं रुरोद । तत्स्वाभाविकमेवेति प्रतिपादयति—अयोऽपि—लौहमपि, अभितप्तम्—अग्नौ सन्तप्तं सत्, मार्दवम्—मृदुताम् नम्रीभवनरूपयोग्य-तामित्यर्थः । भजते शरीरिषु कथैव का ? प्राणिनः ( दुःखेन ) अभितप्ता मार्दवं भजेरन्नित्यत्र किं वक्तव्यम् । अनुक्तमपि सिद्धमेव । अत्र वृत्ति-प्रदर्शितपथेन कठिनस्य लौहस्य तापेन मृदुभावे मानवः साधारणसुखदुःखे द्रवणयोग्यः कथं न मृदुत्वमवलम्बिष्यते इति शरीरिणां मार्दवभजनमर्थादा-गतम् । इत्यर्थापत्तिः ।

इति स्नेहवर्षिण्यामष्टमः कल्पः ।



# अष्टमशिखायाः

## परिशिष्टम् ।

दीपिकायामनुक्तानां व्यवहारे नितरामुपयुक्तानां कियतामलङ्काराणां संक्षिप्य लक्षणोदाहरणे निर्णीयेते—

### स्मरणम्—

"सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते ।"

"पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः ॥"

सदृशस्य—केनाऽपि धर्मेण आकृत्या कृत्या वा समानस्य (वस्तुनः) अनुभवात्—परामर्शजन्यज्ञानात्, वस्तुनः— वर्णनीयस्य, पूर्वानुभूतस्यैवेति भावः । स्मृतिः—चेतोऽवरोहणम्, ( विच्छित्तिमूलमेव ) स्मरणं नाम अलङ्कारः । यथा—पङ्कजमिति । पङ्कजम्—कमलम्, पश्यतः—पुरो विलोकयतः, मे—मम, मनः कान्तामुखम्—प्रेयसीवदनम्, गाहते—ध्यायतीत्यर्थः । अत्र कोमलत्वसौन्दर्य्यादिसाधारणधर्मेण सदृशस्य कमलस्य अनुभवेन, वस्तुनः कान्तामुखस्य चमत्कारिणी स्मृतिर्जातेति स्मरणालङ्कारः ।

### परिकरः—

अलङ्कारः परिकरः साभिप्राये विशेषणे ।

सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ॥"

विशेषणे—विशिष्य बोधने इतरव्यावर्तके इत्यर्थः । साभिप्राये—अभिप्राययुक्ते विधेयोपकारिणि इत्यर्थः । सति, परिकरोति—प्रकृतार्थमुपकरोतीति परिकरो—नामालङ्कारः । उदाहरणं यथा—सुधांशुना—चन्द्रेण, कलितः—कृतः, उत्तंसः—शिरोभूषणम्, येन सः शिवः तापं हरतु—सन्तापमपाकरोतु । अत्र तापहारके शिवे अमृतकिरणेन कृतशिरोभूषण इति विशेषणं महदुपकुरुते । अतोऽत्र परिकरः ।

अधिकम्

"अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम् ।
ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः ॥"
पृथ्वाधेयाद्यदाधाराऽधिक्यं तदपि तन्मतम् ।
क्रियद्वाग्ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव ॥"

आधेयस्य आधारस्य चाधिक्येन द्विविधोऽधिकालङ्कारः । क्रमशः सोदाहरणं निरूपयति । पृथुलात्—महतः, आधारात्—आसमन्तात् ध्रियते अस्मिन्नित्याधारः, तस्मात्, आधेयस्य—अधिकरणाधिष्ठितस्य, आधिक्यवर्णनम्—विपुलताप्रतिपादनम्, एकम् अधिकम् । उदाहरति—यत्र—जले—महाजलौघे ब्रह्माण्डानि—अगणितजगन्मण्डलानि, सन्ति तत्र ते—तव, गुणाः—शौर्य्यौदार्य्यादयः, न मान्ति—न सुखमासते । अत्र आधारभूतात् पृथुलजलौघात् आधेयस्य गुणस्याधिक्यवर्णनेन आधेयाधिक्यं नाम प्रथममधिकम् ।

द्वितीयमधिकं प्रतिपादयति - पृथ्वाधेयात्—विपुलात् आधेयात्, यत्र आधारस्य आधिक्यम् विशालता, तदपि आधाराधिक्यं नाम तत्—अधिकम्—इष्टम् । दृष्टान्तं दर्शयति, यत्र एते—इयद्विपुलाः तव गुणाः, विश्राम्यन्ति—अधिष्ठाय वर्तन्ते, तद् वाक् रूपं ब्रह्म कियत् ? अपरिमितमित्यर्थः । अस्मिन् भक्तकर्तृकपरमेश्वरस्तुतिरूपे पद्ये अगणितानामपि गुणानां शब्दब्रह्मणि सुखेनान्तर्गतत्वात् आधाराधिक्यं नाम अधिकमलङ्कारः ।

विशेषः—

"विशेषः ख्यातमाधारं विनाऽप्याधेयवर्णनम् ।
गतेऽपि सूर्ये दीपस्थास्तमश्छिन्दाति तत्कराः ॥"
"विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते ।
अन्तर्बहिः पुरः पश्चात् सर्वदिक्ष्वपि सैव मे ॥"

"किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः ।
त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम् ॥"

विशेषालङ्कारस्त्रिभेदः क्रमशोऽधस्तात् विमृश्यते—

ख्यातम् प्रसिद्धं सर्वदा नियतम्, आधारं विना आधेयवर्णनं प्रथमः विशेषः यथा—सूर्ये गतेऽपि—अस्तमितेऽपि, तत्कराः—रविकिरणाः, दीपस्थाः सन्तः तमः—अन्धकारम्, छिन्दन्ति—दूरीकुर्वन्ति । अत्र आधेयस्य सूर्यकरस्य, आधारं सूर्यं विना वर्णनम् अतः प्रथमो विशेषालङ्कारः प्रकृतेऽतु रात्रौ सूर्यस्याग्नौ प्रवेशस्य प्रसिद्धिः ।

यदि एकं वस्तु अनेकत्र—बहुषु स्थलेषु वर्ण्यते स द्वितीयो विशेषः । लोके एकं वस्तु एकत्रैव नाधिके स्थाने वर्तते यत्र तु रासे दृश्यमानानेक मूर्तिः कृष्ण इव बहुसंस्थानम् एकमेव वस्तु निबद्ध्यते, तत्र लोकाद् विशिष्टतया विशेष एव । तथाहि—प्रेम्णि भ्रान्तचित्तस्य कस्य चन प्रणयिनस्तरुणस्येयमुक्तिः । अन्तः—मनसि, बहिः—समक्षम्, पुरः—अग्रे, पश्चात्—अदृष्टेऽस्थले । सैव—एका प्राणप्रियैव मे वर्तते । अत्र एकस्या एव तस्या बहुत्र वर्णनात् द्वितीयो विशेषः ।

व्यवहारे यदर्थं प्रयत्यते तदेव सिद्ध्यति । नहिस्वपितुकामस्य पादौ पथि प्रवर्तेते । इति लौकिकनियमपरिहारेण यत्र किञ्चिदारम्भतः—पदार्थान्तरारम्भेण, अशक्यस्य—असम्भविनः, वस्त्वन्तरस्य—आरब्धविषयातिरिक्तस्य, कृतिः--सम्पादनं भवति तत्र तृतीयो विशेषाऽलङ्कारः । त्वाम् पश्यता मया कल्पतरुविलोकनं प्राप्तम् तव दर्शनेन मम मनोरथः सम्पूर्ण इति भावः । अत्र—अन्योजनः,—नेत्रविषयीकरणाय प्रस्तावितः, किन्तु अचिन्तितमेव वस्तु नयनगोचरीकृतमिति विशेष एव ।

परिवृत्तिः—

"परिवृत्ति र्विनिमयो न्यूनाऽभ्याधिकयो मिथः ।"
दृष्टिं दत्वा तु तन्वङ्गी जग्राह मम मानसम् ॥

न्यूनाऽभ्यधिकयोः—अल्पानल्पयोः, मिथः—परस्परम्, न्यूनेन अधिकस्य, अधिकेन न्यूनस्य, च विनिमयः—किञ्चिद्वस्तु दत्वा वस्त्वन्तरादानरूपो व्यापारः परिवृत्ति र्नामालङ्कारः। विनिमयश्चमत्कारात्मक एव। अन्यथा 'रौप्येण स्वर्णमुद्रा लब्धा' इत्यादावति प्रसङ्गः। यथा—तन्वङ्गी—सुन्दरी, दृष्टिं दत्वा—कटाक्षं वितीर्य्य, मम मानसं—चित्तं बहुमूल्यमित्यर्थः। जग्राह—। अत्र न्यूनेन दृष्टिदानेन, अधिकं मानसं गृहीतमिति परिवृत्तिः। एवमधिकेन न्यूनग्रहणेऽपि।

पर्यायः—

"पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः।
पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनं प्रभा॥"

यदि पर्यायेण—परिपाट्या—क्रमशः, एकस्य पदार्थस्य अनेकसंश्रयः—अनेकाधिष्ठानं भवेत् तदा पर्यायो नामान्वर्थोऽलङ्कारः। यथा—प्रभा—कान्तिः, प्रथमं पद्मम्—कमलम्, मुक्त्वा—परिहृत्य, ततः चन्द्रं गता—शशिनमाश्रिता, अनन्तरं कामिनीवदनम्—सुन्दरीमुखम्, संश्रिता—द्वयोरपि सुन्दरीमुखस्य शोभा अनुपमा इत्यर्थः। अत्र एकस्या एव प्रभायाः क्रमशः पद्म—चन्द्र—वदनेषु संश्रयेण पर्यायोऽलङ्कारः।

परिसङ्ख्या—

"परिसङ्ख्या निषिध्यैकमेकस्मिन्वस्तुयन्त्रणम्।"
स्नेहक्षयः प्रदीपेषु, विषं किं ? श्रीः ! मति र्बलम्।

एकं वस्तु निषिद्ध्य एकस्मिन्—परस्मिन्, वस्तुनि वस्तुनो नियन्त्रणम्—नियमनम्, परिसङ्ख्या। सा च 'प्रश्नादप्रश्नतो वाऽपि' 'शाब्दी आर्थी, इति चतुर्धा। उदाहरणम्। प्रदीपेषु स्नेहस्य—तैलघृतादेः, क्षयः—व्ययः, अन्यत्र स्नेहस्य—प्रेम्णो न। अत्र अर्थे व्यवच्छेदः। प्रश्नः—'विषं किम् ?' उत्तरम् 'श्रीः—लक्ष्मीः' अन्यत् विषं विषं नेत्यर्थः। अत्र प्रश्नतो व्यवच्छेदः। मतिः—प्रज्ञा, बलम्—शक्तिः, अन्यत् शारीरिकं बलं नेत्यर्थः। अत्र अप्रश्नतः। एवं 'विषं विषं न,

श्री र्विषम्' अत्र नकारेण प्रतिपाद्ययो र्व्यवच्छेदः शाब्दः । इति चतुर्धा परिसङ्ख्या ।

तद्गुणः—

"तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः ।
पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ॥"

स्वस्य—आत्मनः, गुणस्य—विशिष्टतया व्यवच्छेदकधर्मस्य, त्यागात् अन्यदीयस्य—अपरसम्बन्धिनः, गुणस्य ग्रहः—स्वीकारः, तद्गुणो नामाऽलङ्कारः । तथाहि—ते—तव, नासामौक्तिकम्—नासिकामुक्ताभूषणम्, अधरस्य—अधोगतौष्ठस्य रक्तस्येतिभावः, त्विषा प्रभया, पद्मरागवत् रक्तत्वेन आचरति । तद्वत् प्रतिभातीत्यर्थः । अत्र मुक्तायाः स्वीयगुणत्यागपूर्वकम् अधरगुणस्वीकारेण तद्गुणालङ्कृतिः ।

उदात्तम्—

" उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षणम् ।"
रत्नशृङ्गोऽद्रिरेषोऽभूद्यत्र युद्धं शिवेऽर्जुने ॥

ऋद्धेः—सम्पत्तेः चरितम्—वर्णनम्, एकम् उदात्तम् । तथा श्लाघ्यम्—प्रशस्तम्, चरितम् अन्यस्य—प्रस्तुतस्य वर्णनीयस्य, उपलक्षणम्—अङ्गतया सम्पन्नम्, भवेत् । तत् द्वितीयम् उदात्तम् । यदाह दर्पणकारः—"लोकातिशयसम्पत्ति वर्णनोदात्तमुच्यते । यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ।" उदाहरणमाह—यत्र रुद्रे किरातवेषधारिणि, एवं पार्थे तपश्चर्यां विदधाने युद्धम्—वराहलक्ष्यनिमित्तकमित्यर्थः । रत्नानि शृङ्गे यस्य सः एषः—वर्णनीयतया उपस्थितः, अद्रिः—गिरिः, अस्ति । अत्र रत्नशृङ्गता सम्पत्तेः वर्णनेन प्रथममुदात्तम्, प्रस्तुताङ्गभूतमहच्चरित्रवर्णनेन द्वितीयमुदात्तम् ।

सूक्ष्मम्—

" सूक्ष्मं पराशयाभिज्ञे तरसाकूतचेष्टितम् ।
मयि पश्यति सा केशैः सीमन्तमणिमावृणोत् ॥"

परस्य—अन्यस्य, आशयस्य—अभिप्रायस्य, अभिज्ञे—विज्ञे, त्वरितबोधक्षमे इत्यर्थः । तरसा - झटिति, आकूतेन—अभिप्रायेण, 'आकारेण इङ्गितेन वा' इति तात्पर्यम् । चेष्टितम्—चेष्टाप्रदर्शनम्, मर्मज्ञैरेव वेद्यतयेतिभावः सूक्ष्मं नामाऽलङ्कारः । दृष्टान्तेन स्पष्टयति—मयि—पश्यति—तामुद्दिश्य दृष्टिं प्रेषयति, सा—प्रिया, केशैः—शिरोरुहैः, सीमन्तमणिम्—केशवेशोपरिगत—भूषणम्, आवृणोत्—आच्छादयामास । आशयज्ञे प्रेयसि सा 'अस्तं गते भानौ निशायां त्वयाऽहं द्रष्टव्या' इति सङ्केतितम् । अतः सूक्ष्माऽलङ्कारः ।

भाविकम्—

" भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम् ।
अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुराऽसुराः ॥ "

भूतस्य—अतीतस्य, भाविनः—भविष्यतः, अर्थस्य—पदार्थस्य, यः साक्षात्कारः—प्रत्यक्षायमाणता, तस्य वर्णनं भाविकं नामालङ्कार । तथाहि अद्यापि—इयत्सु युगेषु वीतेष्वपीत्यर्थः । अत्र स्थाने सुराऽसुराः देवदानवाः युद्धयन्ते—परस्परं प्रहरन्ति, इति विलोकये—प्रत्यक्षमनुभवामीत्यर्थः । अत्र अतिप्राचीनमपि वृत्तान्तं समक्षमिव कलयामीति भावः । अत्र भूतस्य प्रत्यक्षायमाणतया भाविकम् अलङ्कारः ।

विनोक्तिः—

"विनोक्तिश्चेद्विना किञ्चित्प्रस्तुतं हीनमुच्यते ।
विद्या हृद्याऽपि साऽवद्या विना विनयसम्पदम् ॥"

यत्र प्रस्तुतम्—प्रकृतं वस्तु, किञ्चिद् वस्तु विना हीनम्—असुभगम्, उच्यते सा विनोक्ति र्नामालङ्कृतिः लक्ष्यं यथा—हृद्याऽपि—हृदयग्राहिण्यपि, सा—प्रसिद्धा, विद्या—शास्त्रज्ञानम, विनयसम्पदं विना—नम्रतागुणमन्तरेण, अवद्या—निन्द्या । 'अवद्यपण्य—' इत्यादिना निपातः । इह प्रस्तुताया विद्याया विनयमन्तरेण हीनता सूचितेति विनोक्तिः ।

पर्यायोक्तम्—

"पर्यायोक्तं यदा भङ्गया गम्यमेवाभिधीयते।
नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ॥"

यदा गम्यम्—व्यङ्ग्यम्, भङ्ग्या—चमत्कारातिशालिना वचोविन्यासेनैव, अभिधीयते तदा पर्यायोक्तम्। इदं तत्त्वं, यत्र गम्यं—व्यङ्ग्यम्, अभिधया बोध्यते अभिधेयञ्च व्यञ्जनया बोध्यते तत्र पर्यायोयोक्तम्। यथाः—येन—कृष्णेन, राहुवधूकुचौ—मुधा विफलौ कृतौ—स्वामिनमन्तरेण सन्ततेरभावत्तयो वैंफल्यम्। तस्मै कृष्णाय नमः। अत्र राहुवधविधायिने 'कृष्णाय' नति समर्पणस्य प्रतिपाद्यत्वे तद्वधूकुचवैयर्थ्य कारिरूप वचोभङ्गया 'राहुहन्ता कृष्णः' इत्यभिधेयो व्यञ्जनया प्रतिपादितः। केचित्तु गम्यम् प्रकृतं विवक्षणीयम् प्रकारान्तरेणाऽभिधीयते यदा तदापर्यायोक्तमिति व्याचख्युः।

व्याजोक्तिः—

"व्याजोक्ति र्गोपनं व्याजादुद्भिन्नस्याऽपि वस्तुनः।
सखि! पश्य गृहारामपरागैरस्मि धूसरा॥"

उद्भिन्नस्य—केनाऽपि चिह्नादिना प्रथमं व्यक्तीभूतस्य, वस्तुनः, व्याजात्—केनचित् छद्मना, गोपनम्—प्रच्छादनम्, प्रकटीभूतस्याऽपि परस्मै वस्त्वन्तरकल्पनया विश्वासमुत्पाद्य निगूहनमिति भावः। व्याजेन—छद्मना उक्तिः, व्याजोक्ति र्नामाऽलङ्कारः। तदुदाहरति—हे सखि। हेवयस्ये। पश्य, अहं गृहारामस्य—सदनसमीपस्थोद्यानस्य परागैः—पुष्परेणुभिः, धूसरा—मलिना—विवर्णा अस्मि। अत्र सुरतजन्यं वैवर्ण्यं प्रकटीभूतमपि परागजन्यतया प्रच्छादितम्।

वक्रोक्तिः—

"वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनम्।
मुञ्च मानं दिनं प्राप्तं नेह नन्दी हरान्तिके॥"

श्लेषेण—द्वयर्थकपदजन्यविच्छित्तेः काका स्वरविकारविशेषेण च (प्रकृतस्य—वक्तुरुद्दिष्टस्य तात्पर्यस्य) अपरार्थे—अर्थान्तरे, प्रकल्पनम्—तन्मुखमुद्रणाय भावान्तरप्रकाशनम्, वक्रा—असरला उक्तिः, वचोभङ्गी, वक्रोक्तिर्नामाऽलङ्कारः । तदेव प्रदर्शयति—कान्तो मानवतीं प्रेयसीमनुनयेति—मानम्—प्रणयकोपम्, मुञ्च—जहिहि, दिनं प्राप्तम्—मानवत्या त्वया सकलाऽपि निशा एवमेव यापिता । सम्प्रति उदिते दिवसे किमिति मानं न तित्यक्षति ? इति कालस्य वचोऽन्यथा वैदग्ध्येन कुर्वती कान्ता 'प्राप्तम्—अधिगतम्, नन्दिनम्—हरवाहनीभूतवृषभविशेषम्, मा मुञ्च' इत्यर्थान्तरं कल्पयन्ती उत्तरयति 'इह नन्दी नास्ति किन्तु हरस्य—शिवस्य, सविधे । अत्र श्लेषेण अन्यार्थे प्रयुक्तं पदमपरत्र अर्थे कल्पितमिति वक्रोक्तिः ।

आक्षेपः—

"आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ।
चन्द्र ! सन्दर्शयात्मानमथवाऽस्ति प्रियामुखम् ॥"

स्वयम्—आत्मना, उक्तस्य—प्रतिपादितस्य विचारणात्—सुचिन्तनात्, प्रतिषेधः - प्रतिबाधः, आक्षेपालङ्कारः । यथा—कोऽपि तरुणो वक्ति—हे चन्द्र ! आत्मानं सन्दर्शय—जननयनगोचरीभव । निजदर्शनेन जगदानन्दय, इत्यर्थः । पुनः किञ्चिद्विचार्य प्रतिरुणद्धि—'अथवा प्रियामुखम्—कान्तावदनम्, तव प्रयोजनं सति प्रियामुखे नास्त्येवेत्यर्थः। पूर्वं स्वयमेव चन्द्रोदयः प्रार्थितः पुनः कान्तामुखं तत्प्रयोजनसम्पादनप्रभु विचिन्त्य चन्द्रमुदयाय निषेधतीति उदाहृत आक्षेपः ।

'सुरेन्द्रा'ऽऽदृत-पादाब्जौ 'सुबुद्धि'—'भुवनेश्वरौ' ।
कृतिः कीर्तीन्दुभृद्भालौ मोदयेत्पितरौ शिवौ ॥

युग-शर-वसु-शशि मित (१८५४) शाकाब्दे श्रीभुवनेश्वरतनुजन्मा ।
स्नेहवर्षिणीव्याख्यामाख्यन्मधुमासे सुरेन्द्रशर्मा ॥

